# श्रीशास्तृशवर्ण-सहस्रनामस्तोत्रम् ॥



# ॥ श्रीशास्तृशवर्णसहस्रनामस्तोत्रम् ॥

## नामावलिश्च ।

अष्टोत्तरशतनामावलिः, पञ्चरत्नम्, स्तुतिदशकम्,
शास्तृपूजाविधिश्च ।





तिरुचिरापल्लि श्री अय्यप्पन् भक्तसंघेन प्रकाशितम् ।

श्रीवाणीविलासमुद्रणालयः

श्रीरङ्गम् ।

1959.

॥ श्रीः ॥

# ॥ श्रीशास्तृशवर्णसहस्रनामस्तोत्रम् ॥



## ( पूर्वभागः )

### आसुरकाण्डे द्वादशोऽध्यायः ॥

आविर्भूतंस्तु भगवान्विघ्नराजो हरिं तदा ।
प्रसन्नोऽस्मि तवाद्येन्द्र वृणु सर्वं त्वदीप्सितम् ॥

इत्युक्तवन्तं विघ्नेशमब्रवीद्वचनं हरिः ।
तव प्रसादाद्विघ्नेश वृक्षाणां पोषणाय हि ॥

भवन्तु भूयांस्यम्भांसीत्येतेषां भक्तवत्सल ।
इन्द्रस्य वचनं श्रुत्वा विघ्नेशः प्रत्युवाच तम् ॥

अण्डस्थानि जलान्याशु तद्ब्रह्माण्डस्थितान्यपि ।
आकाशगङ्गा चान्या वा पातालतटिनी तथा ॥

एवमादीनि लोकेऽस्मिन् वर्तन्ते येषु केषु वा ।
आनेतव्यं जलं किं वा वदेत्याह विनायकः ॥

इन्द्रस्तद्वचनं श्रुत्वा गम्भीरं विशदाक्षरम् ।
विघ्नाधीश दयासिन्धो कुम्भभूस्तपतां वरः ॥

कावेरीं सरितां पुण्यां गृहीत्वा वर्ततेऽधुना ।
आरादेवाधुना गत्वा नेतव्या सा त्वया प्रभो ॥

इत्युक्त्वा प्रश्रयानम्रं तथेत्युक्त्वा जगाम सः ।
काकवेषं गृहीत्वाशु ऋषेर्निकटमद्भुतम् ॥

अगस्त्यस्य तदा गत्वा स्थितोऽयं कुण्डिकोपरि ।
कुण्डिकास्थमृषिश्रेष्ठः काकं दृष्ट्वा त्वरायुतः ॥

करेणोच्चाटयामास तदानीं द्विजसत्तमाः ।
काकस्तु शीघ्रमुड्डीय पादाभ्यां तां निपात्य च ॥

प्रययौ शीघ्रमेवायं किञ्चिद्दूरं भयादिव ।
पतितां कुण्डिकां दृष्ट्वा हा शिवेति तदा वदन् ॥



ऋषिरभ्येत्य काकोऽयं किमर्थमधुनाऽऽगतः ।
इतः पुनः पुरस्ताच्च तिष्ठत्येष सकृद् द्विजाः ॥

येन केनाप्युपायेन हन्तव्योऽयं मया बलात् ।
इत्युक्त्वाऽभ्याशमस्याप तदाऽगस्त्यः क्रुधा भृशम् ॥

तत्र काकमदृष्ट्वायं किमेतदिति विस्मितः ।
इतस्ततस्तदाऽपश्यदुन्नमय्य मुखं मुनिः ॥

दृष्ट्वा माणवकं कञ्चिद्धृतयज्ञोपवीतिनम् ।
अयमेवेति निश्चित्य काकभ्रान्तिरभून्मम ॥

प्रहर्तव्योऽयमधुना कुट्टनेन बहुर्भृशम् ।
इत्यधावत्तदभ्याशमगस्त्यस्सत्यवागयम् ॥

ततस्ससंभ्रमं वर्णी भयाविष्ट इव द्रुतम् ।
किञ्चिद्दूरं तदा गत्वा स्थितस्तत्र पुनश्च सः ॥

गत्वा तत्रापि रभसा यावत्कालेन वै ऋषिः ।
उच्चिक्षेप करं कोपात् कुट्टितुं वर्णिनं तदा ॥

तावदेव पुनश्चायं करग्राह्य इव क्षणात् ।
प्रतारयित्वा शार्दूलमृषीणां पुरतो ययौ ॥

अनेकवारमेवं तमप्रतारयदुज्वलः ।
ततस्स्ववेषं विघ्नेशो दर्शयामास तस्य सः ॥

गणैर्नानाविधैरेव सेवितः परितस्तदा ।
तं दृष्ट्वा ऋषिवर्योयं गजवक्त्रं महोदरम् ॥

शूर्पकर्णं प्रलम्बोष्ठं सकलं कामरूपिणम् ।
गणानां त्वा गणपतिं कवीनाञ्च कविं परम् ॥

ब्रह्मणां ज्येष्ठराजञ्च प्रणमामि शिवं सदा ।
सर्वविघ्नप्रशमनं सर्वपापनिवारकम् ॥

स्कन्दस्य पूर्वजं तद्वत् प्रणमामि विनायकं ।
एवं स्तुत्वा गणेशानं प्रणनाम पुनः पुनः ॥

अगस्त्य तपतां वर्य विन्ध्यगर्वनिवारक ।
प्रसन्नोस्मि तवात्यर्थमधुना कांक्षितं वद ॥



इत्युक्तवन्तं विघ्नेशमगस्त्यो वाचमब्रवीत् ।
क्षन्तव्यस्त्वपराधोऽयं मम भक्तदयानिधे ॥

तव पादाम्बुजे भक्तिर्भूयादव्यभिचारिणी ।
कावेरी च सरिन्नीता वलये परमेशितुः ॥

पतनात् कुण्डिकायास्सा गजवक्त्र गता खलु ।
पूजार्थं परमेशस्य भवितव्यञ्जलेन नः ॥

यस्माद्भवन्तं पाणिभ्यामहं कुट्टितुमागतः ।
ममैव कुट्टनं भूयादिति मूर्ध्नि स्वके तदा ॥

कृतमुष्टिकराभ्यां तु कृतवांस्तदहो द्विजाः ।
एवमुक्त्वा स्थितं भक्तमगस्त्यं कृत्यवेदिनम् ॥

प्राह गंभीरया वाचा सान्त्वयन् वचनं तदा ।
इन्द्रेण प्रार्थितोऽत्यर्थमगस्त्य ऋषिसत्तम ॥

वृक्षसंशोषणवशाज्जलार्थमहमागतः ।
कमण्डलुश्च तेनैव पातितः कारणेन हि ॥

त्वया कृतमिदं सर्वं ममात्यन्तं प्रियं खलु ।
पूजार्थं च पुरारातेरिदं भवतु वै जलम् ॥

इति शुण्डामुखेनायं गृहीत्वाम्भःकणं तदा ।
कावेर्यामथ विघ्नेशः कुण्डिकायामवाकिरत् ॥

तत्क्षणेनैव साऽत्यर्थं पूर्णा सर्वत्र चास्रवत् ।
एवं बहुवरं दत्वा ययावन्तर्धिमाशु सः ॥

अगस्त्यस्तु ततश्शीघ्रं कुद्दालाख्यपुरं ययौ ।
तत्रत्या वैष्णवास्सर्वे दृष्ट्वैनमृषिसत्तमम् ॥

भूतिभूषितसर्वांगं रुद्राक्षपरिभूषितम् ।
शैवेनात्र त्वया विप्र नागन्तव्यमिदं पुरम् ॥

इत्यूचिरे तदानीं ते तथेत्युक्त्वा पुराद्बहिः ।
गत्वाऽगस्त्यस्तु शीघ्रेण रूपं भागवतं ऋषिः ॥

गृहीत्वा मायया भूयो नगरं तद्विवेश सः ।
दृष्ट्वा भागवतं सर्वे वीथीस्था वैष्णवास्तदा ॥



प्रणम्य बहुमानेन प्रापयामासुरालयम् ।
विष्णोरथ चकारायं भाषणं भाषया च तैः ॥

ततस्तु वैष्णवान् प्रेक्ष्य कार्या पूजाऽत्र वैष्णवी ।
मयेत्युक्त्वा तदागस्त्यो बहिस्तानप्यचोदयत् ॥

विष्णुं स्पृष्ट्वा करेणाथ शिवभावनया भृशम् ।
अमर्दयत्तदा शीघ्रमभूद्विष्णुश्शिवाकृतिः ॥

अगस्त्यस्तु ततश्शम्भुं पूजयामास भक्तितः ।
लिङ्गाकारं विधानेन प्रेक्षितो वैष्णवैरपि ॥

अथ सर्वेपि संभूय प्रहर्तुं शीघ्रमागताः ।
चुकोप दृष्ट्वा तानेष कुम्भभूरपि वैष्णवान् ॥

कोपाग्निना तदा तप्तास्तस्य ते दुद्रुवुर्भृशम् ।
आरोप्य शैवान् तत्रायमगस्त्यस्सह्यमागतः ॥

दधीचकण्वशैलादिभृगूणां गौतमस्य च ।
गुरुदुर्वाससोश्चापि स्मृत्वा शापं तदा ऋषिः ॥

विप्रतीकारयुक्तोभूत् स तान् प्रति भृशं द्विजाः ।
विप्राश्शृणुत कावेरी यदा याता कमण्डलोः ॥

श्रीकाषाख्यपुरस्यैवं वृक्षवाटीषु वाहिनी ।
तदानीमेव ते वृक्षा गतशीर्णपलाशकाः ॥

प्रादुर्भूताङ्कुरास्सर्वे नानापुष्पोपशोभिताः ।
तादृशांस्तान्बलारातिर्दृष्ट्वा विगतदुर्मनाः ॥

प्रीतियुक्तस्तदात्यर्थं स्ववेषं परिगृह्य सः ।
पूजयामास विश्वेशं शच्या साकमरिन्दमः ॥

पत्राणि च विचित्राणि सुगन्धिकुसुमान्यपि ।
हृत्वा हृत्वा च बहुशश्शंभुं तं संयमोद्यमः ॥

तत्रान्तरे दिविषदो द्रष्टुं देवेन्द्रमागताः ।
प्रणम्य देवास्सर्वे ते देवेन्द्रं वाचमूचिरे ॥

एकाकिना त्वया साकं शच्यात्र स्थीयते कथम् ।
मुक्त्वा देवांस्त्वदीयांश्च च्छद्मना वनवासिना ॥



यथापूर्वममी देवा देवेन्द्राद्य कृपाबलात् ।
पालनीया दिवि स्थित्वा कृतासुरविचोदनाः ॥

एवमुक्त्वा स्थितान्देवान्दीनानत्यर्थमाह सः ।
शृणुध्वममरास्सर्वे किं कर्तव्यं मयाधुना ॥

आनीता बहवो मीनाश्शूरस्य वचनात्पुरा ।
मधुमांसादिकं तद्वद्गर्हितं यर्हिकर्हिचित् ॥

एवं कृतेऽपि शूरोऽयमिन्द्राणीं धर्षितुं बलात् ।
कारागृहे पातयितुमियेष किल मां तथा ॥

मानभङ्गभयाद्भीतो वर्तेहमधुनात्र हि ।
स्थित्वाप्यत्र महादेवमसुराणां क्षयाय च ॥

पूजयामि भवन्तोपि यतोऽत्र च समागताः ।
ततः कैलासशिखरं गमिष्यामोऽधुना वयम् ॥

तथैव सर्वे स्थास्याम इत्युक्त्वा तानयं हरिः ।
स्थापयित्वा शचीमाप निवेदयितुमाशु सः ॥

ज्ञात्वैतदिंगितेनेयं शुशोचोद्विग्नमानसा ।
शोकं त्यज प्रिये देवास्सर्वेप्यत्र समागताः ॥
गत्वा तैस्साकमाश्वेवं विज्ञाप्य च महेश्वरम् ।
कैलासवासिनं भूयश्चागमिष्यामि तेन्तिकम् ।
पालकस्तव शास्तायं भवत्विति तदाब्रवीत् ॥

इन्द्राणी —

कोयं शास्ता वद स्वामिन्यो मां पालयतीश्वरः ।
पालकत्वं च सर्वेषामेतस्य कथमागतम् ॥

इति आसुरकाण्डे द्वादशोध्यायः ॥

---

## त्रयोदशोऽध्यायः ॥

इन्द्रः —

पुरा देवासुरास्सर्वे ममन्थुः किल वारिधिम् ।
पीयूषं यत्तदा जातं तेभ्यो दातुमिदं हरिः ॥



मोहिनीवेषमास्थाय मारयित्वाऽसुरांस्तदा ।
विभज्य देवांस्त्वरसा भोजयामास वै यदा ॥
तदानीमाविरासीद्धि तां द्रष्टुश्च महेश्वरः ।
दृष्ट्वा तां मोहिनीं रम्यां लोलापाङ्गसमीक्षणाम् ॥
स्फुरत्सौदामिनीरम्यां स्थिरत्वाप्रतियोगिनीम् ।
चारुहारमनोहारिकुचाभ्यां नतमध्यमाम् ॥
सुरतश्च तदा कर्तुमियेष परमेश्वरः ।
उवाच वचनश्चापि संभोगोत्र मया सह ॥
कर्तव्य इति मेऽत्यर्थं रागः खलु वराङ्गने ।
इत्युक्तवन्तमीशानं धर्षणोत्कं तदा तु सा ॥
कथमीश मया साकं संभोगः क्रियतां त्वया ।
नारायणोहमधुना मोहिनीरूपमास्थितः ॥
इत्युक्त्वा व्रीळया नम्रां पुनः प्रोवाच शङ्करः ।
त्वं मे चतसृणां मध्ये शक्तीनां पुरुषाह्वया ॥

शक्तिस्तथा पुरा त्वां तु भुक्त्वाऽजश्चाप्यजीजनम् ।
दारुकाख्यवने तद्वन्मोहिनीरूपमास्थितः ॥

त्वमेव मां तदा रन्तुमियेषिथ किल प्रिये ।
रमिष्ये त्वामहं रम्ये तत्राद्येत्यवदं किल ॥

तस्मान्मयात्र संरन्तु त्वमर्हसि पुनः पुनः ।
एवमुक्तेपि विमुखां जवेनैव तदा हरः ॥

गृहीत्वोत्तानयित्वाशु रेमे च सुमनोहराम् ।
सालवृक्षस्य निकटे जम्बूद्वीपस्थितस्य सः ॥

तस्योच्चसुरतोद्वेगमक्षमा सोढुमाशु सा ।
उद्गारयामास तदा भृशं खिन्नशरीरिणी ॥

तज्जलश्च शचीन्द्राणि गण्डकाख्याभवन्नदी ।
जायन्ते तत्र कीटाश्च वज्रदन्ताभिधास्तथा ॥

ते सर्वे मृत्तिकासूक्ष्मास्तत्रत्या वदनाम्बुना ।
कुलायमाकलय्याशु मुनयो निवसंति हि ॥



यदा सरित् स्रवति सा मरिष्यन्ति तदा च ते ।
नदीप्रवाहे नीडानि गच्छन्त्येतानि भूरिशः ॥

तत्रस्था मनुजाः केचिज्जालं कृत्वाप्सु तानि ते ।
कुलायमध्यस्वर्णश्च गृहीत्वा विक्रयन्ति हि ॥

सालग्रामानि तान्येव कुलायानि प्रियेऽधुना ।
विष्णूद्वाराभिजातत्वाद्वैष्णवी प्रथिता शिला ॥

तस्मादद्यापि लोकेस्मिन् शिवलिङ्गस्य सूरयः ।
शंसन्ति शक्तिपीठार्थं विशेषाद्गण्डकीशिलाम् ॥

एवं तयोस्सुजातत्वाच्छास्तापि च तथाभवत् ।
हरेर्हरस्यापि तथा पुत्रत्वमिति भावितम् ॥

गत्वायं तु महादेवं किं कृत्यं मम भोः पितः ।
एवमुक्त्वावनम्रस्य भुवनेश्वरतां ददौ ॥

स तु शास्ता कुमारोयं शम्भोस्त्वामभिरक्षतु ।
इत्युक्त्वाथ तदेन्द्रोयं सस्मार जगतां प्रभुम् ॥

शास्तारमेकचित्तेन शच्याः पुरत एव सः ।
तदानीमाविरासीद्धि शास्ता किं करवाण्यहम् ॥

इति ब्रुवन् गणौघेन क्रूरेण परितो वृतः ।
शास्तस्त्वयात्र संरक्ष्या शची मे प्राणवल्लभा ॥

गन्तव्योयं मया शंभोः कैलासाख्यो महीधरः ।
मदागमनपर्यन्तमित्युक्त्वा तां तदन्तिके ॥

निवेशयित्वानुमतस्तया तेनापि वृत्रहा ।
प्रतस्थे दैवतैस्सार्धं कैलासं प्रति शीघ्रतः ॥

इन्द्राणीमपि शास्तायं रक्षितुं गणनायकम् ।
परिकल्प्य महाकालं स्वावासञ्च तदा ययौ ॥

इन्द्रोपि दैवतैस्साकं प्रस्थितो द्रुतमाप सः ।
कैलासमपि लाधोधतमस्काण्डरविप्रभम् ॥

गत्वा तत्र च शैलादिं दृष्ट्वा तं सहसा सुरैः ।
प्रणम्य दूरतस्तिष्ठन्नाहूतोभ्याशमागतः ॥



किमर्थमधुना चेन्द्र वदात्रागमनं तव ।
इति पृष्टस्तदा तेन व्याचष्ट भयकम्पितः ॥

सेवार्थं परमेशस्य शैलादेद्यागतोस्म्यहम् ।
सह सर्वैस्सुरैस्सार्धं दया कार्या मयि प्रभो ॥

इत्युक्त्वाह नतं नन्दी गणानामग्रणीर्हरिम् ।
पुरन्दराधुना गच्छ सेवार्थे परमेशितुः ॥

न च तेऽवसरोस्त्यत्र सनकादेर्महेश्वरः ।
ज्ञानोपदेशं कृत्वायमास्ते सर्वेश्वरस्स्वयम् ॥

शैलादेर्वचनं श्रुत्वा सहसैव सुरैस्तदा ।
प्रणम्य नन्दिनं भूयः प्रापान्यं शिखरञ्च सः ॥

तत्र गत्वा महादेवं ध्यात्वा तैरवसत्सह ।
एतस्मिन्नन्तरे विप्राः क्रूरा पापरता च या ॥

परिभ्रमंती चाण्डस्य विवरं क्षणमात्रतः ।
धर्षणी मार्गमध्यस्थान् पुरुषान् सुबहूनपि ॥

प्रापयन्ती परस्त्रीणां शूरस्यानुदिनं तथा ।
स्वभावसुन्दरीणाञ्च द्विसहस्रं बलाद्भृशम् ॥
श्रीकाषाख्यपुरोद्यानवृक्षवाटीषु भीषणा ।
अजवक्त्रागता सख्या दुर्मुख्या स्वैरिणी सह ॥
तत्र दृष्ट्वा शचीं रम्यामिन्द्रस्य प्राणनायिकाम् ।
कुतूहलेन युक्ता सा प्रोवाच वचनं तदा ॥
तिष्ठस्यत्र किमर्थं त्वं त्वदर्थश्चागतं मया ।
मद्भ्राता सार्वभौमोयं शास्ति विश्वमशेषतः ॥
त्वदुत्कतास्य महती वर्त्तते चाधुना शचि ।
त्वमागता चेत्तस्यान्तःपुरं शीघ्रं तदासुरः ॥
त्वामेव नायिकां कृत्वा त्वया साकं रमिष्यते ।
इन्द्रादिदेवास्सर्वेऽपि भृतकास्तस्य दुर्बलाः ॥
तस्मात् त्वमद्य निर्गच्छ मुक्त्वैतत् स्थलमाशु हि ।
नो चेदहं बलात्कारादानयिष्यामि मानिनि ॥



इत्युक्त्वाभ्याशगां प्रेक्ष्य शची प्राह तदासुरीम् ।
समुन्नताः पुरा देवास्सम्पदा सुतरां तदा ॥
असुरा दुर्बला जाता यथाकर्मानुसारतः ।
दरिद्रो वा समृद्धो वा पतिर्यस्यास्स एव हि ॥
उल्लंघितुमशक्या हि नीतिरव्यभिचारिणी ।
बलात्कारेण नीत्वाहं गच्छाम्युक्तमिति त्वया ॥
मद्रक्षकमविज्ञाय गणानां परमीश्वरम् ।
गच्छ गच्छाधुना मूर्खे किं जानासि दुरात्मनि ॥
इत्युक्तां तामसौ क्रोधात्पश्याम्येनं विमोचकम् ।
तवेत्युक्त्वासुरी शीघ्रं विचकर्ष किल द्विजाः ॥
ततश्चुक्रोश सात्यर्थं धूयमानकरा शची ।
हा हेति च भयाविष्टा वेपमानाङ्गयष्टिका ॥
उत्क्रोशनं तदा श्रुत्वा किमेतदिति विस्मितः ।
दृष्ट्वोत्थितो महाकाळो वृक्षमूलाच्छचीमिमाम् ॥

धावयामास शीघ्रेण तदा क्रुद्धोसुरीं प्रति ।
मुञ्च मूढेऽधुनेन्द्राणीं छित्वा हस्तं त्वदीयकम् ॥
पातयिष्यामि खड्गेनेत्युक्तवान् गणनायकः ।
प्राहैनमजवक्त्रा सा को भवानिति कोपतः ॥
यस्तु लोकं प्रशास्त्येतं श्वेतो यस्य गजो वरः ।
यश्शक्त्यां पुरुषाख्यायां जातश्चन्द्रशिखामणेः ॥
भृत्यस्तस्याहमधुना किं त्वया मुञ्च मानिनीम् ।
एवमुक्ता तदा पापा शूलमादाय वेगतः ॥
चिक्षेप तं महाकाळो वेगेन शतधाच्छिनत् ।
पुनश्च शूलमन्यत्सा दुर्मुखी हस्तसंस्थितम् ॥
आदाय शीघ्रमिन्द्राणीं प्रापयित्वा च तत्करम् ।
अचिक्षिपत्तदा घोरं घोरा यावद्बलादियम् ॥
तेनैतच्छतधा कृत्वा पातितं पूर्ववद्भुवि ।
ततस्तु पर्वतं शीघ्रं कञ्चिदादाय सा भृशम् ॥



जघानैनं तदा भूयो महाकाळस्तमच्छिनत् ।
खड्गोप्यस्य तदा भग्नः पर्वताघातवेगतः ॥
भग्नं दृष्ट्वा तु सा खड्गं किं त्वयेति निरायुध ।
ब्रुवन्ती तां शचीं भूयो विचकर्ष किल द्विजाः ॥
अथ कोपवशादेनामेत्य वीरोसुरीं तदा ।
महाकाळो महाकायो गृहीत्वास्याः करं तदा ॥
कटिबद्धलसत्सूक्ष्मकरवाळेन भीषणः ।
चिच्छेद च करं तस्याः कठिनं निशितेन सः ॥
दुर्मुख्याश्च करं छित्वा पातयामास भूतले ।
इन्द्राणीं मोचयित्वाशु वृक्षारामे स्थितः पुनः ॥

विललाप विकीर्णकेशपाशा
वसुधालिङ्गनजातपांसुजाला ।
अथ वीक्ष्य करं द्विधा कृतं सा
नितरां खिन्नमनास्तदा द्विजेन्द्राः ॥

जलधिं चुळकीकरोम्यहं
रविचन्द्रावधुनाभ्रतारकाः ।
वियति द्रुतमेव मेदिनीं
श्रितभु व्योम तथा जलादिकम् ॥

इत्युक्त्वा विलपन्तीं तां भूयो भूयो रसातलम् ।
करेणास्फाल्य वीक्ष्यान्यं छिन्नं प्राहाथ दुर्मुखी ॥

इति आसुरकाण्डे त्रयोदशोध्यायः ॥



॥ श्रीः ॥

# ॥ शास्तृशवर्णसहस्रनामस्तोत्रम् ॥



अस्य श्रीशास्तृशवर्णसहस्रनामस्तोत्रमहामन्त्रस्य नैध्रुवऋषिः, अनुष्टुप्छन्दः, शास्ता देवता। ओं भूताधिपाय विद्महे इति बीजम्। ओं महादेवाय धीमहि इति शक्तिः। ओं तन्नः शास्ता प्रचोदयात् इति कीलकम्। साधकाभीष्टसाधने पूजने विनियोगः। ओं ह्रां भूताधिपाय विद्महे अङ्गुष्ठाभ्यां नमः। ओं ह्रीं महादेवाय धीमहि तर्जनीभ्यां नमः। ओं ह्रुं तन्नः शास्ता प्रचोदयात् अनामिकाभ्यां नमः। ओं ह्रैं तन्नः शास्ता प्रचोदयात् मध्यमाभ्यां नमः। ओं ह्रौं महादेवाय धीमहि कनिष्ठिकाभ्यां नमः। ओं ह्रः भूताधिपाय विद्महे करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। ध्यानम् —

श्रीशोमेशात्मपुत्रं श्रितजनवरदं श्लाघनीयापदानं
क्लेशोद्भ्रान्तिप्रणाशं क्लिशितरिपुचयं क्लेदसंकाशमालम्।
कोशोच्चाश्वाधिरूढं परिगतमृगयाखेलनानन्दचित्तं
पाशोच्चण्डास्त्रपाणिं वरदमभयदं स्तौमि शास्तारमीशम्॥

ओं शंनो दाता शंभृताङ्कः शंतनुः शंतनुस्तुतः ।
शंवाच्यः शंकृतिप्रीतः शंदः शांतनवस्तुतः ॥ १ ॥

शंकरः शंकरी शंभुः शंभूवैं शंभुवल्लभः ।
शंसः शंस्थापतिः शंस्यः शंसितः शंकरप्रियः ॥

शंयुः शंखः शंभवोऽपि शंसापातं शकेडितः ।
शकटघ्नार्चितः शक्तः शकारिपरिपूजितः ॥

शकुनज्ञः शकुनदः शकुनीश्वरपालकः ।
शकुनारूढविनुतः शकटासुफल (प्रदः) प्रियः ॥ ४ ॥

शकुन्तेशात्मजस्तुत्यः शकलाक्षकयुग्रथः ।
शकृत्करिस्तोमपालः शक्वरीच्छन्दईडितः ॥



शक्तिमान् शक्तिभृद्भक्तः शक्तिभृच्छक्तिहेतिकः ।
शक्तः शक्रस्तुतः शक्यः शक्रगोपतनुच्छविः ॥

शक्रजायाभीष्टदाता शक्रसारथिरक्षकः ।
शक्राणीविनुतः शक्तः शक्रोत्सवसमातृकः ॥

शक्रध्वजसंप्राप्तबलैश्वर्यविराजितः ।
शक्रोत्थानक्रियारम्भबलिपूजाप्रमोदितः ॥ ८ ॥

शङ्कुः शङ्काविरहितः शंकरीचित्तरञ्जकः ।
शंकरावासधौरेयः शंकरालयभोगदः ॥ ९ ॥

शंकरालंकृतदरः शङ्खी शङ्खनिधीश्वरः ।
शङ्खध्मः शङ्खभृच्छङ्खनखः शङ्खजभूषणः ॥

शङ्खास्यः शङ्खिनीलोलः शङ्खिकः शङ्खभृत्प्रियः ।
शचीविरहविध्वस्तः शचीपतिविनोददः ॥ ११ ॥

शटीगन्धः शटाजूटः शठमूलकृतादरः ।
शठपुष्पधरः शस्ता शठात्मकनिबर्हणः ॥ १२ ॥

शणस्थलधरः शाणी शाण्डिल्यादिमुनिस्तुतः ।
शतकीर्तिः शतधृतिः शतकुन्दसुमप्रियः ॥ १३ ॥

शतकुम्भाद्रिनिलयः शतक्रतुजयप्रदः ।
शतद्रुतटसंचारी शतकण्ठसमद्युतिः ॥ १४ ॥

शतवीर्यः शतबलः शताङ्गी शतवाहनः ।
शत्रुघ्नः शत्रुघ्ननुतः शत्रुजिच्छत्रुवञ्चकः ॥ १५ ॥

शलालुकंधरधरः शनिपीडाहरः शिखी ।
शनिप्रदोषसंजातस्वभक्तभरणोत्सुकः ॥ १६ ॥

शन्यर्चितः शनित्राणः शन्यनुग्रहकारकः ।
शबराखेटनरतः शपथः शपथक्षणः ॥ १७ ॥

शब्दनिष्ठः शब्दवेदी शमी शमधनस्तुतः ।
शमीगर्भप्रियः शम्बः शम्बरारिसहोदरः ॥ १८ ॥

शयण्डविमुखः शण्डी शरणागतरक्षकः ।
शरजन्मप्राणसखः शरजन्मसहोदरः ॥ १९ ॥



शरजन्मानुसरणः शरजन्मचमूपतिः ।
शरजन्मामात्यवर्यः शरजन्मप्रियंकरः ॥ २० ॥

शरजन्मगणाधीशः शरजन्माश्रयाधरः ।
शरजन्माग्रसंचारी शरासनधरः शरी ॥ २१ ॥

शरारुघ्नः शर्कुरेष्टः शर्मदः शर्मविग्रहः ।
शर्यातिजयदः शस्त्री शशभृद्भूषनन्दनः ॥ २२ ॥

शश्वद्बलानुकूलोऽपि शष्कुलीभक्षणादरः ।
शस्तः शस्तवरः शस्तकेशकः शस्तविग्रहः ॥

शस्त्राढ्यः शस्त्रभृद्देवः शस्त्रक्रीडाकुतूहलः ।
शस्यायुधः शार्ङ्गपाणी शार्ङ्गिस्त्रीप्रियनन्दनः ॥

शाकप्रियः शाकदेवः शाकटायनसंस्तुतः ।
शाक्तधर्मरतः शाक्तः शाक्तिकः शाक्तरञ्जकः ॥

शाकिनीडाकिनीमुख्ययोगिनीपरिसेवितः ।
तथा शाड्वलनाथश्च शाठ्यकर्मरताहितः ॥ २६ ॥

शाण्डिल्यगोत्रवरदः शान्तात्मा शातपत्रकः ।
शातकुम्भसुमप्रीतः शातकुम्भजटाधरः ॥ २७ ॥

शातोदरप्रभः शाभः शाड्वलक्रीडनादरः ।
शानपादारसंचारी शालशान्वयमर्दनः ॥ २८ ॥

शान्तः शान्तनिधिः शान्तिः शान्तात्मा शान्तिसाधकः ।
शान्तिकृच्छान्तिकुशलः शान्तधीः शान्तविग्रहः ॥

शान्तिकामः शान्तिपतिः शान्तीड्यः शान्तिवाचकः ।
शान्तस्तुतः शान्तनुतः शान्तेडयः शान्तपूजितः ॥

शापास्त्रः शापकुशलः शापायुधसुपूजितः ।
शापघ्नः शापदीनेड्यः शापद्विट् शापनिग्रहः ॥

शापार्जितः शाकटिकवाहप्रीतश्च शामिनी ।
शाब्दिकः शाब्दिकनुतः शाब्दबोधप्रदायकः ॥

शाम्बरागमवेदी च शाम्बरः शाम्बरोत्सवः ।
शामिनीदिग्विहारोऽथ शामित्रगणपालकः ॥



शाम्भवः शाम्भवाराध्यः शामिलालेपनादरः ।
शांभवेष्टः शांभवाढ्यः शांभवी शंभुपूजकः ॥ ३४ ॥

शारभ्रूः शारदः शारी शारदानिवहद्युतिः ।
शारदेड्यः शारदीष्टः शारिस्थः शारुकान्तकः ॥

शार्कुखादी शार्कुरेष्टः शारीरमलमोचकः ।
शार्ङ्गी शार्ङ्गिसुतः शार्ङ्गिप्रीतः शार्ङ्गिप्रियादरः ॥

शार्दूलाक्षः शार्वराभः शार्वरीप्रियशेखरः ।
शालंकीड्यः शालबाभः शालकामार्चकादरः ॥

शाश्वतः शाश्वतैश्वर्यः शासिता शासनादरः ।
शास्त्रज्ञः शास्त्रतत्त्वज्ञः शास्त्रदर्शी च शास्त्रवित् ॥

शास्त्रचक्षुः शास्त्रकर्षी (कुक्षी) शास्त्रकृच्छास्त्रचारणः ।
शास्त्री शास्त्रप्रतिष्ठाता शास्त्रार्थः शास्त्रपोषकः ॥

शास्त्रहेतुः शास्त्रसेतुः शास्त्रकेतुश्च शास्त्रभूः ।
शास्त्राश्रयः शास्त्रगेयः शास्त्रकारश्च शास्त्रदृक् ॥

शास्त्राङ्गः शास्त्रपूज्यश्च शास्त्रग्रथनलालसः ।
शास्त्रप्रसाधकः शास्त्रज्ञेयः शास्त्रार्थपण्डितः ॥
शास्त्रपारंगतः शास्त्रगुणविच्छास्त्रशोधकः ।
शास्त्रकृद्वरदाता च शास्त्रसंदर्भबोधकः ॥ ४२ ॥
शास्त्रकृत्पूजितः शास्त्रकरः शास्त्रपरायणः ।
शास्त्रानुरक्तः शास्त्रात्मा शास्त्रसंदेहभञ्जकः ॥
शास्त्रनेता शास्त्रपूतः शास्त्रयोनिश्च शास्त्रहृत् ।
शास्त्रलोलः शास्त्रपालः शास्त्रकृत्परिरक्षकः ॥ ४४ ॥
शास्त्रधर्मः शास्त्रकर्मा शास्त्रशीलश्च शास्त्रनुत् ।
शास्त्रदृष्टिः शास्त्रपुष्टिः शास्त्रतुष्टिश्च शास्त्रचित् ॥
शास्त्रशुद्धिः शास्त्रबुद्धिः शास्त्रधीः शास्त्रवर्धनः ।
शास्त्रप्रज्ञः शास्त्रविज्ञः शास्त्रार्थी शास्त्रमण्डलः ॥
शास्त्रस्पृक् शास्त्रनिपुणः शास्त्रसृक् शास्त्रमङ्गलः ।
शास्त्रधीरः शास्त्रशूरः शास्त्रधीरश्च शास्त्रसत् ॥ ४७ ॥



शास्त्राधिपः शास्त्रदेवः शास्त्रक्रीडोऽथ शास्त्रराट् ।
शास्त्राढ्यः शास्त्रसारज्ञः शास्त्रं शास्त्रप्रदर्शकः ॥
शास्त्रप्रौढः शास्त्ररूढः शास्त्रगूढश्च शास्त्रपः ।
शास्त्रध्यानः शास्त्रगुणः शास्त्रेशानश्च शास्त्रभूः ॥
शास्त्रज्येष्ठः शास्त्रनिष्ठः शास्त्रश्रेष्ठश्च शास्त्ररुक् ।
शास्त्रत्राता शास्त्रभर्ता शास्त्रकर्ता च शास्त्रमुत् ॥
शास्त्रधन्यः शास्त्रपुण्यः शास्त्रगण्यश्च शास्त्रधीः ।
शास्त्रस्फूर्तिः शास्त्रमूर्तिः शास्त्रकीर्तिश्च शास्त्रभृत् ॥
शास्त्रप्रियः शास्त्रजायः शास्त्रोपायश्च शास्त्रगीः ।
शास्त्राधारः शास्त्रचरः शास्त्रसारश्च शास्त्रधुक् ॥
शास्त्रप्राणः शास्त्रगणः शास्त्रत्राणश्च शास्त्रभाक् ।
शास्त्रनाथः शास्त्ररथः शास्त्रसेनश्च शास्त्रदः ॥
शास्त्रस्वामी शास्त्रभूमा शास्त्रकामी च शास्त्रसुक् ।
शास्त्रप्रख्यः शास्त्रमुख्यः शास्त्रविख्योऽथ शास्त्रवान् ॥

शास्त्रवर्णः शास्त्रपूर्णः शास्त्रकर्णोऽथ शास्त्रपुट् ।
शास्त्रभोगः शास्त्रयोगः शास्त्रभागश्च शास्त्रयुक् ॥
शास्त्रोज्वलः शास्त्रबालः शास्त्रनामा च शास्त्रभुक् ।
शास्त्रश्रीः शास्त्रसंतुष्टः शास्त्रोक्तः शास्त्रदैवतम् ॥
शास्त्रमौलिः शास्त्रकेलिः शास्त्रपालिश्च शास्त्रमुक् ।
शास्त्रराज्यः शास्त्रभोज्यः शास्त्रेज्यः शास्त्रयाजकः ॥
शास्त्रसौख्यः शास्त्रविभुः शास्त्रप्रेष्ठश्च शास्त्रजुट् ।
शास्त्रवीर्यः शास्त्रकार्यः शास्त्रार्हः शास्त्रतत्परः ॥
शास्त्रग्राही शास्त्रवहः शास्त्राक्षः शास्त्रकारकः ।
शास्त्रश्रीदः शास्त्रदेहः शास्त्रशेषश्च शास्त्रत्विट् ॥
शास्त्रह्लादी शास्त्रकलः शास्त्ररश्मिश्च शास्त्रधीः ।
शास्त्रसिन्धुः शास्त्रबन्धुः शास्त्रयत्नश्च शास्त्रभित् ॥
शास्त्रप्रदर्शी शास्त्रेष्टः शास्त्रभूषश्च शास्त्रगः ।
शास्त्रसंघः शास्त्रसखस्तथा शास्त्रविशारदः ॥ ६१ ॥



शास्त्रप्रीतः शास्त्रहितः शास्त्रपूतोऽथ शास्त्रकृत् ।
शास्त्रमाली शास्त्रयायी शास्त्रीयः शास्त्रपारदृक् ॥
शास्त्रस्थायी शास्त्रचारी शास्त्रगीः शास्त्रचिन्तनः ।
शास्त्रध्यानः शास्त्रगानः शास्त्राली शास्त्रमानदः ॥
शिक्यपालः शिक्यरक्षः शिखण्डी शिखरादरः ।
शिखरं शिखरीन्द्रस्थः शिखरीव्यूहपालकः ॥
शिखरावासनप्रीतः शिखावलवशादृतः ।
शिखावान् शिखिमित्रश्च शिखीड्यः शिखिलोचनः ॥
शिखायोगरतः शिग्रुप्रीतः शिग्रुजखादनः ।
शिग्रुजेक्षुरसानन्दः शिखिप्रीतिकृतादरः ॥ ६६ ॥
शितः शितिः शितिकण्ठादरश्च शितिवक्षरुक् ।
शिञ्जच्छिकाहेमकान्तिवस्त्रः शिञ्जितमण्डितः ॥
शिथिलारिगणः शिञ्जी शिपिविष्टप्रियः शिफी ।
शिबिप्रियः शिबिनुतः शिबीड्यश्च शिबिस्तुतः ॥

शिबिकष्टहरः शिब्याश्रितश्च शिबिकाप्रियः ।
शिबिरी शिबिरत्राणः शिबिरालयवल्लभः ॥ ६९ ॥

शिबिवल्लभसत्प्रेमा शिराफलजलादरः ।
शिरजालंकृतशिराः शिरस्त्राणविभूषितः ॥ ७० ॥

शिरोरत्नप्रतीकाशः शिरोवेष्टनशोभितः ।
शिलादसंस्तुतः शिल्पी शिवदश्च शिवङ्करः ॥

शिवः शिवात्मा शिवभूः शिवकृच्छिवशेखरः ।
शिवज्ञः शिवकर्मज्ञः शिवधर्मविचारकः ॥ ७२ ॥

शिवजन्मा शिवावासः शिवयोगी शिवास्पदः ।
शिवस्मृतिः शिवधृतिः शिवार्थः शिवमानसः ॥

शिवाढ्यः शिववर्यज्ञः शिवार्थः शिवकीर्तनः ।
शिवेश्वरः शिवाराध्यः शिवाध्यक्षः शिवप्रियः ॥

शिवनाथः शिवस्वामी शिवेशः शिवनायकः ।
शिवमूर्तिः शिवपतिः शिवकीर्तिः शिवादरः ॥



शिवप्राणः शिवत्राणः शिवत्राता शिवाज्ञकः ।
शिवपश्च शिवक्रीडः शिवदेवः शिवाधिपः ॥ ७६ ॥

शिवज्येष्ठः शिवश्रेष्ठः शिवप्रेष्ठः शिवाधिराट् ।
शिवराट् शिवगोप्ता च शिवाङ्गः शिवदैवतः ॥ ७७ ॥

शिवबन्धुः शिवसुहृच्छिवाधीशः शिवप्रदः ।
शिवाग्रणीः शिवेशानः शिवगीतः शिवोच्छ्रयः ॥ ७८ ॥

शिवस्फूर्तिः शिवसुतः शिवप्रौढः शिवोद्यतः ।
शिवसेनः शिवचरः शिवभर्ता शिवप्रभुः ॥ ७९ ॥

शिवैकराट् शिवप्रज्ञः शिवसारः शिवस्पृहः ।
शिवग्रीवः शिवनामा शिवभूतिः शिवान्तरः ॥ ८० ॥

शिवमुख्यः शिवप्रख्यः शिवविख्यः शिवाख्यगः ।
शिवध्याता शिवोद्गाता शिवदाता शिवस्थितिः ॥ ८१ ॥

शिवानन्दः शिवमतिः शिवार्हः शिवतत्परः ॥
शिवभक्तः शिवासक्तः शिवशक्तः शि[illegible]ः ॥ ८२ ॥

शिवदृक् शिवसंपन्नः शिवहृच्छिवमण्डितः ।
शिवभाक् शिवसंधाता शिवश्लाघी शिवोत्सुकः ॥ ८३ ॥
शिवशीलः शिवरसः शिवलोलः शिवोत्कटः ।
शिवलिङ्गः शिवपदः शिवँसंधः शिवोज्ज्वलः ॥ ८४ ॥
शिवश्रीदः शिवकलः शिवमान्यः शिवप्रदः ।
शिवव्रतः शिवहितः शिवप्रीतः शिवाशयः ॥ ८५ ॥
शिवनिष्ठः शिवजपः शिवसंज्ञः शिवोर्जितः ।
शिवमानः शिवस्थानः शिवगानः शिवोपमः ॥ ८६ ॥
शिवानुरक्तः शिवहृच्छिवहेतुः शिवार्चकः ।
शिवकेलिः शिववटुः शिवचाटुः शिवास्त्रवित् ॥ ८७ ॥
शिवसङ्गः शिवधरः शिवभावः शिवार्थकृत् ।
शिवलीलः शिवस्वान्तः शिवेच्छः शिवदायकः ॥ ८८ ॥
शिवशिष्यः शिवोपायः शिवेष्टः शिवभावनः ।
शिवप्रधीः शिवविभुः शिवाभीष्टः शिवध्वजः ॥ ८९ ॥



शिववान् शिवसंमोहः शिवर्धिः शिवसंभ्रमः ।
शिवश्रीः शिवसंकल्पः शिवगात्रः शिवोक्तिदः ॥ ९० ॥
शिववेषः शिवोत्कर्षः शिवभाषः शिवोत्सुकः ।
शिवमूलः शिवापालः शिवशूलः शिवाबलः ॥ ९१ ॥
शिवाचारः शिवाकारः शिवोदारः शिवाकरः ।
शिवहृष्टः शिवोद्दिष्टः शिवतुष्टः शिवेष्टदः ॥ ९२ ॥
शिवडिम्भः शिवारम्भः शिवोज्जृम्भः शिवाभरः ।
शिवमायः शिवचयः शिवदायः शिवोच्छ्रयः ॥ ९३ ॥
शिवव्यूहः शिवोत्साहः शिवस्नेहः शिवावहः ।
शिवलोकः शिवालोकः शिवौकाः शिवसूचकः ॥ ९४ ॥
शिवबुद्धिः शिवर्धिश्च शिवसिद्धिः शिवर्धिदः ।
शिवधीः शिवसंशुद्धिः शिवधीः शिवसिद्धिदः ॥ ९५ ॥
शिवनामा शिवप्रेमा शिवभूः शिवचित्तमः ।
शिवाविष्टः शिवादिष्टः शिवाभीष्टः शिवेष्टकृत् ॥ ९६ ॥

शिवसेवी शिवकविः शिवख्यातः शिवच्छविः ।
शिवलीनः शिवच्छन्नः शिवध्यानः शिवस्वनः ॥ ९७ ॥

शिवपालः शिवस्थूलः शिवजालः शिवालयः ।
शिवावेशः शिवोद्देशः शिवादेशः शिवोद्यतः ॥ ९८ ॥

शिवपक्षः शिवाध्यक्षः शिवरक्षः शिवेक्षणः ।
शिवपद्यः शिवोद्विद्यः शिवहृद्यः शिवाद्यकः ॥ ९९ ॥

शिवपाद्यः शिवस्वाद्यः शिवार्घ्यः शिवपाद्यकः ।
शिवार्हः शिवहार्दश्च शिवबिम्बः शिवार्भकः ॥ १०० ॥

शिवमण्डलमध्यस्थः शिवकेलिपरायणः ।
शिवामित्रप्रमथनः शिवभक्तार्तिनाशनः ॥ १०१ ॥

शिवभक्तिप्रियरतः शिवप्रवणमानसः ।
शिववाञ्छभ्यपुष्टाङ्गः शिवारिहरणोत्सुकः ॥ १०२ ॥

शिवानुग्रहसंधाता शिवप्रणयतत्परः ।
शिवपादाब्जलोलम्बः शिवपूजापरायणः ॥ १०३ ॥



शिवकीर्तनसंतुष्टः शिवोल्लासक्रियादरः ।
शिवापदानचतुरः शिवकार्यानुकूलदः ॥ १०४ ॥

शिवपुत्रप्रीतिकरः शिवाश्रितगणेष्टदः ।
शिवमूर्धाभिषिक्ताङ्गः शिवसैन्यपुरःसरः ॥ १०५ ॥

शिवनिश्वाससंपूर्णः शिवप्रमथसुन्दरः ।
शिवलीलाविनोदज्ञः शिवविष्णुमनोहरः ॥ १०६ ॥

शिवप्रेमार्द्रदिव्याङ्गः शिववागमृतार्थवित् ।
शिवपूजाग्रगण्यश्च शिवमङ्गलचेष्टितः ॥ १०७ ॥

शिवदूषकविध्वंसी शिवाज्ञापरिपालकः ।
शिवसंसारशृङ्गारः शिवज्ञानप्रदायकः ॥ १०८ ॥

शिवस्थानधृतोद्दण्डः शिवयोगविशारदः ।
शिवप्रेमास्पदोच्चण्डदण्डनाडम्बरोद्भटः ॥ १०९ ॥

शिवार्चकपरित्राता शिवभक्तिप्रदायकः ।
शिवध्यानैकनिलयः शिवधर्मपरायणः ॥ ११० ॥

शिवस्मरणसांनिध्यः शिवानन्दमहोदरः ।
शिवप्रसादसंतुष्टः शिवकैवल्यमूलकः ॥ १११ ॥
शिवसंकीर्तनोल्लासः शिवकैलासभोगदः ।
शिवप्रदोषपूजाप्तसर्वसौभाग्यसुन्दरः ॥ ११२ ॥
शिवलिङ्गार्चनासक्तः शिवनामस्मृतिप्रदः ।
शिवालयस्थापकश्च शिवाद्रिक्रीडनोत्सुकः ॥ ११३ ॥
शिवापदाननिपुणः शिववाक्परिपालकः ।
शिवानीप्रीतिकलशः शिवारातिविनाशकः ॥ ११४ ॥
शिवात्मकक्रियालोलः शिवसायुज्यसाधकः ।
शिशिरेष्टः शिशिरदः शिशिरर्तुप्रियः शिशुः ॥ ११५ ॥
शिशुप्रियः शिशुत्राता शिशुभाषी शिशूत्सवः ।
शिशुपालनतात्पर्यः शिशुपूज्यः शिशुक्षमः ॥ ११६ ॥
शिशुपालक्रोधहरः शिशुशक्तिधरस्तुतः ।
शिशुपालघ्नविनुतः शिशुपालनचेष्टितः ॥ ११७ ॥



शिशुचान्द्रायणप्रीतः शिशुभावावनप्रभुः ।
शीकरप्रणयः शीकराङ्गः शीघ्रश्च शीघ्रशः ॥ ११८ ॥
शीघ्रवेदी शीघ्रगामी शीघ्रयोद्धा च शीघ्रधीः ।
शीघ्रकप्रियकृच्छीघ्री शीघ्रदाता च शीघ्रभृत् ॥
शीतालंकरणः शीतजलास्वादनतत्परः ।
शीतः शीतकरः शीतपुष्पधारी च शीतगुः ॥ १२० ॥
शीतप्रियः शीतभानुः शीतरश्मिश्च शीतलः ।
शीताप्रभः शीतलाढ्यः शीतांशुः शीतवीर्यकः ॥१२१॥
शीतलाङ्गः शीतसहः शीताद्रिनिलयप्रियः ।
शीत्पुटभ्रूः शीतनेत्रः शीर्णाघ्रिभयनाशनः ॥ १२२ ॥
शीतात्मगिरिसंचारी शीर्णपर्णसुमोत्करः ।
शीभज्ञः शीर्षण्यधरः शीर्परक्षोऽथ शीलवान् ॥ १२३ ॥
शीलज्ञः शीलदः शीलपालकः शीलवत्प्रभुः ।
शुकतुण्डनिभापाङ्गः शुकवाहनसोदरः ॥ १२४ ॥

शुकप्रियफलास्वादः शुकवाक्यप्रियः शुभी ।
शुकवाहप्रियः शुक्तिकाजहारः शुकप्रियः ॥ १२५ ॥
शुक्रः शुक्रभुगारूढभूतः शुक्रप्रपूजितः ।
शुक्रशिष्यान्तकः शुक्रवर्णः शुक्रकरः शुचिः ॥
शुक्लः शुक्लनुतः शुक्ली शुक्लपुष्पश्च शुक्लदः ।
शुक्लाङ्गः शुक्लकर्मा च शुचिभूमिनिवासकः ॥ १२७ ॥
शुचिप्रदः शुचिकरः शुचिकर्मा शुचिप्रियः ।
शुचिरोचिः शुचिमतिः शुण्ठीगुडजलादरः ॥ १२८ ॥
शुद्धः शुद्धफलाहारः शुद्धान्तपरिपालकः ।
शुद्धचेताः शुद्धकर्मा शुद्धभावोऽथ शुद्धिदः ॥ १२९ ॥
शुभः शुभाङ्गः शुभकृच्छुभेच्छः शुभमानसः ।
शुभभाषी शुभनुतः शुभवर्षी शुभादरः ॥ १३० ॥
शुभशीलः शुभप्रीतः शुभंयुः शुभपोषकः ।
शुभंकरः शुभगणः शुभाचारः शुभोत्सवः ॥ १३१ ॥



शुभादरः शुभोदारः शुभाहारः शुभावहः ।
शुभान्वितः शुभहितः शुभवर्णः शुभाम्बरः ॥ १३२ ॥
शुभभक्तः शुभासक्तः शुभयुक्तः शुभेक्षणः ।
शुभ्रः शुभ्रगणः शुभ्रवस्त्रः शुभ्रविभूषणः ॥ १३३ ॥
शुभविध्वंसिनीभूतः शुल्कादाननिपातकः ।
शुष्मद्युतिः शुष्मिसखः शुश्रूपादूतशंकरः ॥ १३४ ॥
शूरः शूराश्रितः शूरगणः शूरश्च भूपतिः ।
शूरप्रवरसंदोहः शूरभक्तश्च शूरवान् ॥ १३५ ॥
शूरसेनः शूरनुतः शूरपालश्च शूरजित् ।
शूरदेवः शूरविभुः शूरनेता च शूरराट् ॥ १३६ ॥
शूलपाणियुतः शूली शूलयुद्धविशारदः ।
शूलिनीप्रियकृच्छूलविलस्तरिपुमण्डलः ॥ १३७ ॥
शृङ्गारखेलः शृङ्गारगात्रः शृङ्गारशेखरः ।
शृङ्गारजटिलः शृङ्गाटकसंचारकौतुकः ॥ १३८ ॥

शृङ्गारभूषणः शृङ्गारयोनिजननार्भकः ।
शेमुषीदुःखहन्ता च शेखरीकृतमूर्धजः ॥ १३९ ॥

शेषस्तुतः शेषपाणिः शेषभूषणनन्दन ।
शेषाद्रिनिलयप्रीतः शेषोदरसहोदर ॥ १४० ॥

शैलजाप्रियकृत्कर्मा शैलराजप्रपूजितः ।
शैलादिविनुतः शैवः शैवशास्त्रप्रचारकः ॥ १४१ ॥

शैवधीरः शैववीरः शैवशूरश्च शैवराट् ।
शैवत्राणः शैवगणः शैवप्राणश्च शैववित् ॥ १४२ ॥

शैवशास्त्रः शैवशास्त्राढ्यः शैवभृच्छैवपालकः ।
शैवदक्षः शैवपक्षः शैवरक्षोऽथ शैवहृत् ॥ १४३ ॥

शैवाङ्गः शैवमन्त्रज्ञः शैवतन्त्रश्च शैवदः ।
शैवमौनी शैवमतिः शैवयन्त्रविधायकः ॥ १४४ ॥

शैवव्रतः शैवनेता शैवज्ञः शैवसैन्यकः ।
शैवनन्द्यः शैवपूज्यः शैवराज्योऽथ शैवपः ॥ १४५ ॥



शोणापाङ्गः शोणनखः शोणरत्नविभूषितः ।
शोकघ्नः शोभनास्त्रश्च शोधकः शोभनप्रदः ॥ १४६ ॥

शोषितारिः शोषहारी शोषिताश्रितरक्षकः ।
शौरीडग्रः शौरिवरदः शौरिद्विट्प्राणहारकः ॥ १४७ ॥

श्रद्धाधारश्च श्रद्धालुः श्रद्धावित्परिपालकः ।
श्रवणानन्दजनकः श्रवणाभरणोज्ज्वलः ॥ १४८ ॥

श्रीदः श्रीदप्रियः श्रीदस्तुतः श्रीदप्रपूजितः ।
श्रुतिज्ञः श्रुतिवित्पूज्यः श्रुतिसारः श्रुतिप्रदः ॥ १४९ ॥

श्रुतिमौलिनुतप्रेमडिम्भः श्रुतिविचारकः ।
श्लाघ्यः श्लाघापरः श्लाघ्यगणः श्लाघ्यगुणाकरः ॥

श्वेताङ्गश्च श्वेतगजरथः श्वेतसुमादरः ।
श्रीधृक् श्रीधरदांपत्यसार्थसंमोहनाकृतिः ॥ १५१ ॥

श्रीकामाश्रितसंदोहकैरवानन्दचन्द्रमाः ।
इतीदं शास्तृदेवस्य शिवविष्णुस्वरूपिणः ॥ १५२ ॥

नाम्नां सहस्रं दिव्यानां शादीनां संप्रकीर्तितम् ।
य इदं शृणुयान्नित्यं प्रपठेच्च प्रयत्नतः ।
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ १५३॥

इति श्रीशास्तृशवर्णसहस्रनामस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

## ॥ श्रीशास्तृशवर्णसहस्रनामावलिः ॥



ओं शंनोदात्रे नमः
शंभृताङ्काय
शंतनवे
शंतनुस्तुताय
शंवाच्याय
शंकृतिप्रीताय
शंदाय
शान्तनवस्तुताय
शंकराय
शंकरिणे १०
शंभवे

ओं शंभुवे नमः
शंभुवल्लभाय
शंसाय
शंस्थापतये
शंस्याय
शंसिताय
शंकरप्रियाय
शंयवे
शङ्खाय २०
शंभवाय
शंसापालाय

ओं शकेडिताय नमः
शकटघ्नार्चिताय
शक्ताय
शकारिपरिपूजिताय
शकुनज्ञाय
शकुनदाय
शकुनीश्वरपालकाय
शकुनारूढविनुताय
शकटासुफलप्रदाय
शकुन्तेशात्मजस्तुत्याय
शकुलाक्षकृपुग्रथाय
शकृत्करिस्तोमपालाय
शक्करीछन्दईडिताय
शक्तिमते
शक्तिभृद्भक्ताय

ओं शक्तिभृते नमः
शक्तिहेतिकाय
शक्ताय ४०
शक्रस्तुताय
शक्याय
शक्रगोपतनुच्छवये
शक्रजायाभीष्टदात्रे
शक्रसारथिरक्षकाय
शक्राणीविनुताय
शक्राय
शक्रोत्सवसमातृकाय
शक्रध्वजसंप्राप्तबलै-
स्वर्यविराजिताय
शक्रोत्थानक्रियारम्भ
बलिपूजाप्रमोदिताय



ओं शङ्कवे नमः
शङ्काविरहिताय
शङ्करीचित्तरञ्जकाय
शङ्करावासधौरेयाय
शङ्करालयभोगदाय
शङ्करालंकृतदराय
शङ्खिने
शङ्खनिधीश्वराय
शङ्खध्माय
शङ्खभृते ६०
शङ्खनखाय
शङ्खजभूषणाय
शङ्खास्याय
शङ्खिनीलोलाय
शङ्खिकाय

ओं शङ्खभृत्प्रियाय नमः
शचीविरहविध्वस्ताय
शचीपतिविनोदाय
शटीगन्धाय
शटाजूटाय ७०
शठमूलकृतादराय
शठपुष्पधराय
शस्त्वे
शठात्मकनिबर्हणाय
शणसूत्रधराय
शाणिने
शाण्डिल्यादि-
मुनिस्तुताय
शतकीर्तये
शतधृतये

ओं शतकुन्दसुम-
प्रियायनमः ८०
शतकुम्भाद्रिनिलयाय
शतक्रतुजयप्रदाय
शतद्रुतटसंचारिणे
शतकण्ठसमद्युतये
शतवीर्याय
शतबलाय
शताङ्गिने
शतवाहनाय
शत्रुघ्नाय
शत्रुघ्ननुताय ९०
शत्रुजिते
शत्रुपक्षकाय
शलालुकंधरधराय

ओं शनिपीडाहराय नमः
शिखिने
शनिप्रदोषसंजात-
स्वभक्तभरणोत्सुकाय
शन्यर्चिताय
शनित्राणाय
शन्यनुग्रहकारकाय
शबराखेटनरताय
शपथाय
शपथक्षणाय
शब्दनिष्ठाय
शब्दवेदिने
शमिने
शमधनस्तुताय
शमीगर्भप्रियाय



ओं शम्बाय नमः
शम्बरारिसहोदराय
शयण्डविमुखाय ११०
शण्डिने
शरणागतरक्षकाय
शरजन्मप्राणसखाय
शरजन्मसहोदराय
शरजन्मानुसरणाय
शरजन्मचमूपतये
शरजन्मामात्यवर्याय
शरजन्मप्रियङ्कराय
शरजन्मगणाधीशाय
शरजन्माश्रयाधराय
शरजन्माग्रसंचारिणे
शरासनधराय

ओं शरिणे नमः
शरारुघ्नाय
शर्कुरेष्टाय १२५
शर्मदाय
शर्मविग्रहाय
शर्यातिजयदाय
शल्लिणे
शशभृद्भूपनन्दनाय
शश्वद्वलानुकूलाय
शष्कुलीभक्षणादराय
शस्ताय
शस्तवराय
शस्तकेशकाय
शस्तविग्रहाय
शस्त्राढ्याय

ओं शस्त्रभृद्देवाय नमः
शस्त्रक्रीडाकुतूहलाय
शस्यायुधाय १४०
शार्ङ्गपाणये
शार्ङ्गस्त्रीप्रियनन्दनाय
शाकप्रियाय
शाकदेवाय
शाकटायनसंस्तुताय
शाक्तधर्मरताय
शाक्ताय
शाक्तिकाय
शाक्तरञ्जकाय
शाकिनीडाकिनी-
मुख्ययोगिनीपरि-
सेविताय १५०

ओं शाड्वलनाथाय नमः
शाठ्यकर्मरताहिताय
शाण्डिल्यगोत्रवरदाय
शान्तात्मने
शातपत्रकाय
शातकुम्भसुमप्रीताय
शातकुम्भजटाधराय
शातोदरप्रभाय
शाभाय
शाड्वलक्रीडनादराय
शानपादारसंचारिणे
शाल्वान्वयमर्दनाय
शान्ताय
शान्तनिधये
शान्तये



ओं शान्तात्मने नमः
शान्तिसाधकाय
शान्तिकृते
शान्तिकुशलाय
शान्तधिये १७०
शान्तविग्रहाय
शान्तिकामाय
शान्तिपतये
शान्तीड्याय
शान्तिवाचकाय
शान्तस्तुताय
शान्तनुताय
शान्तेड्याय
शान्तपूजिताय
शापास्त्राय १८०

ओं शापकुशलाय नमः
शापायुधसुपूजिताय
शापघ्नाय
शापदीनेड्याय
शापद्विषे
शापनिग्रहाय
शापार्जिताय
शाकटिकवाहप्रीताय
शामिनिने
शाब्दिकाय १९०
शाब्दिकनुताय
शाब्दबोधप्रदायकाय
शाम्बरागमवेदिने
शाम्बराय
शाम्बरोत्सवाय

ओं शामिनीदिग्विहाराय नमः
शामित्रगणपालकाय
शांभवाय
शांभवाराध्याय
शामिलालेपनादराय
शांभवेष्टाय
शांभवाढ्याय
शांभवीशंभुपूजकाय
शारभ्रुवे
शारदाय
शारिणे
शारदानिवहद्युतये
शारदेड्याय
शारदीष्टाय
शारिस्थाय २१०

ओं शारुकान्तकाय नमः
शार्कुखादिने
शार्कुरेष्टाय
शारीरमलमोचकाय
शार्ङ्गिणे
शार्ङ्गिसुताय
शार्ङ्गिप्रीताय
शार्ङ्गिप्रियादराय
शार्दूलाक्षाय
शार्वराभाय
शार्वरीप्रियशेखराय
शालंकीडयाय
शालवाभाय
शालकामार्चकादराय
शाश्वताय



ओं शाश्वतैश्वर्याय नमः
शासित्रे
शासनादराय
शास्त्रज्ञाय
शास्त्रतत्वज्ञाय
शास्त्रदर्शिने
शास्त्रविदे
शस्त्रचक्षुषे
शास्त्रकुक्षिणे
शास्त्रकृते
शास्त्रचारणाय
शास्त्रिणे
शास्त्रप्रतिष्ठात्रे
शास्त्रार्थाय
शास्त्रपोषकाय

ओं शास्त्रहेतवे नमः
शास्त्रसेतवे
शास्त्रकेतवे
शास्त्रभुजे
शास्त्राश्रयाय
शास्त्रगेयाय
शास्त्रकाराय
शास्त्रदृशे
शास्त्राङ्गाय
शास्त्रपूज्याय २५०
शास्त्रग्रथनलालसाय
शास्त्रप्रसाधकाय
शास्त्रज्ञेयाय
शास्त्रार्थपण्डिताय
शास्त्रपारंगताय

ओं शास्त्रगुणविदे नमः

शास्त्रशोधकाय
शास्त्रकृद्वरदात्रे
शास्त्रसंदर्भबोधकाय
शास्त्रकृत्पूजिताय
शास्त्रकराय
शास्त्रपरायणाय
शास्त्रानुरक्ताय
शास्त्रात्मने
शास्त्रसंदेहभञ्जकाय
शास्त्रनेत्रे
शास्त्रपूताय
शास्त्रयोनये
शास्त्रहृदे
शास्त्रलोलाय

ओं शास्त्रपालाय नमः

शास्त्रकृत्परिरक्षकाय
शास्त्रधर्माय
शास्त्रकर्मणे
शास्त्रशीलाय
शास्त्रनुते
शास्त्रदृष्टये
शास्त्रपुष्टये
शास्त्रतुष्टये
शास्त्रचिदे
शास्त्रशुद्धये
शास्त्रबुद्धये
शास्त्रधिये
शास्त्रवर्धनाय
शास्त्रप्रज्ञाय



ओं शास्त्रविज्ञाय नमः

शास्त्रार्थिने
शास्त्रमण्डलाय
शास्त्रस्पृशे
शास्त्रनिपुणाय
शास्त्रसृजे
शास्त्रमङ्गलाय
शास्त्रधीराय
शास्त्रशूराय
शास्त्रधीराय
शास्त्रसते
शास्त्राधिपाय
शास्त्रदेवाय
शास्त्रक्रीडाय
शास्त्रराजे ३००

ओं शास्त्राढ्याय नमः

शास्त्रसारज्ञाय
शास्त्राय
शास्त्रप्रदर्शकाय
शास्त्रप्रौढाय
शास्त्ररूढाय
शास्त्रगूढाय
शास्त्रपाय
शास्त्रध्यानाय
शास्त्रगुणाय
शास्त्रेशानाय
शास्त्रभुवे
शास्त्रज्येष्ठाय
शास्त्रनिष्ठाय
शास्त्रश्रेष्ठाय

ओं शास्त्ररुचे नमः
शास्त्रत्रात्रे
शास्त्रभर्त्रे
शास्त्रकर्त्रे
शास्त्रमुदे
शास्त्रधन्याय
शास्त्रपुण्याय
शास्त्रगण्याय
शास्त्रधिये
शास्त्रस्फूर्तये
शास्त्रमूर्तये
शास्त्रकीर्तये
शास्त्रभृते
शास्त्रप्रियाय
शास्त्रजायाय

ओं शास्त्रोपायाय नमः
शास्त्रगिरे
शास्त्राधाराय
शास्त्रचराय
शास्त्रसाराय
शास्त्रदुहे
शास्त्रप्राणाय
शास्त्रगणाय
शास्त्रत्राणाय
शास्त्रभाजे
शास्त्रनाथाय
शास्त्ररथाय
शास्त्रसेनाय
शास्त्रदाय
शास्त्रस्वामिने



ओं शास्त्रभूम्ने नमः
शास्त्रकामिने
शास्त्रभुजे
शास्त्रप्रख्याय
शास्त्रमुख्याय ३५०
शास्त्रविख्याय
शास्त्रवते
शास्त्रवर्णाय
शास्त्रपूर्णाय
शास्त्रकर्णाय
शास्त्रपुषे
शास्त्रभोगाय
शास्त्रयोगाय
शास्त्रभागाय
शास्त्रयुजे ३६०

ओं शास्त्रोज्ज्वलाय न
शास्त्रबालाय
शास्त्रनाम्ने
शास्त्रभुजे
शास्त्रश्रिये
शास्त्रसंतुष्टाय
शास्त्रोक्ताय
शास्त्रदैवताय
शास्त्रमौलये
शास्त्रकेलये
शास्त्रपालये
शास्त्रमुचे
शास्त्रराज्याय
शास्त्रभोज्याय
शास्त्रेज्याय

ओं शास्त्रयाजकाय नमः
शास्त्रसौख्याय
शास्त्रविभवे
शास्त्रप्रेष्ठाय
शास्त्रजुषे
शास्त्रवीर्याय
शास्त्रकार्याय
शास्त्राहाय
शास्त्रतत्पराय
शास्त्रग्राहिणे
शास्त्रवहाय
शास्त्राक्षाय
शास्त्रकारकाय
शास्त्रश्रीदाय
शास्त्रदेहाय

ओं शास्त्रशेषाय नमः
शास्त्रत्विषे
शास्त्रह्लादिने
शास्त्रकलाय
शास्त्ररश्मये
शास्त्रधिये
शास्त्रसिन्धवे
शास्त्रबन्धवे
शास्त्रयत्नाय
शास्त्रभिदे ४००
शास्त्रप्रदर्शिने
शास्त्रेष्टाय
शास्त्रभूषाय
शास्त्रगाय
शास्त्रसंघाय



ओं शास्त्रसखाय नमः
शास्त्रविशारदाय
शास्त्रप्रीताय
शास्त्रहिताय
शास्त्रपूताय
शास्त्रकृते
शास्त्रमालिने
शास्त्रयायिने
शास्त्रीयाय
शास्त्रपारदृशे
शास्त्रस्थायिने
शास्त्रचारिणे
शास्त्रगिरे
शास्त्रचिन्तनाय
शास्त्रध्यानाय

ओं शास्त्रगानाय नमः
शास्त्रालये
शास्त्रमानदाय
शिक्यपालाय
शिक्यरक्षाय
शिखण्डिने
शिखरादराय
शिखराय
शिखरीन्द्रस्थाय
शिखरीव्यूहपालकाय
शिखरावासनप्रीताय
शिखावलवशादृताय
शिखावते
शिखिमित्राय
शिखीड्याय

ओं शिखिलोचनाय नमः
शिखायोगरताय
शिग्रुप्रीताय
शिग्रुजखादनाय
शिग्रुजेक्षुरसानन्दाय
शिखिप्रीतिकृतादराय
शिताय
शितये
शितिकण्ठादराय
शितिवक्षरुचे
शिञ्जिञ्चिकाहेम-
कान्तिवस्त्राय
शिञ्जितमण्डिताय
शिथिलारिगणाय
शिञ्जिने

ओं शिपिविष्टप्रियाय नमः
शिफिने
शिबिप्रियाय
शिबिनुताय
शिबीड्याय
शिबिस्तुताय
शिबिकष्टहराय
शिब्याश्रिताय
शिबिकाप्रियाय
शिबिरिणे
शिबिरत्राणाय
शिबिरालयवल्लभाय
शिबिवल्लभसत्प्रेम्णे
शिराफलजलादराय
शिराजालंकृतशिराय



ओं शिरस्त्राणविभूषिताय
शिरोरत्नप्रतीकाशाय
शिरोवेष्टनशोभिताय
शिलादसंस्तुताय
शिल्पिने
शिवदाय
शिवंकराय
शिवाय
शिवात्मने
शिवभुवे
शिवकृते
शिवशेखराय
शिवज्ञाय
शिवकर्मज्ञाय
शिवधर्मविचारकाय

ओं शिवजन्मने नमः
शिवावासाय
शिवयोगिने
शिवास्पदाय
शिवस्मृतये
शिवधृतये
शिवार्थाय
शिवमानसाय
शिवाढ्याय
शिववर्यज्ञाय
शिवार्थाय
शिवकीर्तनाय
शिवेश्वराय
शिवाराध्याय
शिवाध्यक्षाय

ॐ शिवप्रियाय नमः
शिवनाथाय
शिवस्वामिने
शिवेशाय
शिवनायकाय
शिवमूर्तये ५००
शिवपतये
शिवकीर्तये
शिवादराय
शिवप्राणाय
शिवत्राणाय
शिवत्रात्रे
शिवाङ्काय
शिवपाय
शिवक्रीडाय

ॐ शिवदेवाय नमः
शिवाधिपाय
शिवज्येष्ठाय
शिवश्रेष्ठाय
शिवप्रेष्ठाय
शिवाधिराजे
शिवराजे
शिवगोप्त्रे
शिवाज्ञाय
शिवदैवताय
शिवबन्धवे
शिवसुहृदे
शिवाधीशाय
शिवप्रदाय
शिवाग्रण्ये



ॐ शिवेशानाय नमः
शिवगीताय
शिवोच्छ्रयाय
शिवस्फूर्तये
शिवसुताय
शिवप्रौढाय
शिवोद्यताय
शिवसेनाय
शिवचराय
शिवभर्त्रे
शिवप्रभवे
शिवैकराजे
शिवप्रज्ञाय
शिवसाराय
शिवस्पृहाय

ॐ शिवग्रीवाय नमः
शिवनाम्ने
शिवभूतये
शिवान्तराय
शिवमुख्याय
शिवप्रख्याय
शिवविख्याय
शिवाख्यगाय
शिवध्यात्रे
शिवोद्गात्रे
शिवदात्रे
शिवस्थितये
शिवानन्दाय
शिवमतये
शिवार्हाय

ओं शिवतत्पराय नमः
शिवभक्ताय
शिवासक्ताय
शिवशक्ताय
शिवाग्रगाय
शिवदृशे
शिवसंपन्नाय
शिवहृदे
शिवमण्डिताय
शिवभाजे
शिवसंधात्रे
शिवश्लाघिने
शिवोत्सुकाय
शिवशीलाय
शिवरसाय

ओं शिवलोलाय नमः
शिवोत्कटाय
शिवलिङ्गाय
शिवपदाय
शिवसंधाय
शिवोज्ज्वलाय
शिवश्रीदाय
शिवकलाय
शिवमान्याय
शिवप्रदाय
शिवव्रताय
शिवहिताय
शिवप्रीताय
शिवाशयाय
शिवनिष्ठाय



ओं शिवजपाय नमः
शिवसंज्ञाय
शिवोर्जिताय
शिवमानाय
शिवस्थानाय
शिवगानाय
शिवोपमाय
शिवानुरक्ताय
शिवहृदे
शिवहेतवे
शिवार्चकाय
शिवकेलये
शिववटवे
शिवचाटवे
शिवास्त्रविदे

ओं शिवसज्ञाय नमः
शिवधराय
शिवभावाय
शिवार्थकृते
शिवलीलाय
शिवस्वान्ताय
शिवेच्छाय
शिवदायकाय
शिवशिष्याय
शिवोपायाय
शिवेष्टाय ६१०
शिवभावनाय
शिवप्रध्ये
शिवविभवे
शिवाभीष्टाय

ओं शिवध्वजाय नमः
शिवव्रते
शिवसंमोहाय
शिवर्धये
शिवसंभ्रमाय
शिवश्रियै ६२०
शिवसंकल्पाय
शिवगात्राय
शिवोक्तिदाय
शिववेषाय
शिवोत्कर्षाय
शिवमायाय
शिवोत्सुकाय
शिवसूलाय
शिवापालाय

ओं शिवशूलाय नमः ६३०
शिवावलाय
शिवाचाराय
शिवाकाराय
शिवोदाराय
शिवाकराय
शिवहृष्टाय
शिवोद्दिष्टाय
शिवतुष्टाय
शिवेष्टदाय
शिवडिम्भाय ६४०
शिवारम्भाय
शिवोज्जृम्भाय
शिवाभराय
शिवमायाय



ओं शिवचयाय नमः
शिवोदाराय
शिवोच्छ्रयाय
शिवव्यूहाय
शिवोत्साहाय
शिवस्नेहाय ६५०
शिवावहाय
शिवलोकाय
शिवालोकाय
शिवौकसे
शिवसूचकाय
शिवबुद्धये
शिवर्धये
शिवसिद्धये
शिवर्धिदाय

ओं शिवधिये नमः ६६०
शिवसंशुद्धये
शिवगिरे
शिवसिद्धिदाय
शिवनाम्ने
शिवप्रेम्णे
शिवभुवे
शिववित्तमाय
शिवाविष्टाय
शिवादिष्टाय
शिवाभीष्टाय ६७०
शिवेष्टकृते
शिवसेविने
शिवकवये
शिवख्याताय

ओं शिवच्छवये नमः
शिवलीनाय
शिवच्छन्नाय
शिवध्यानाय
शिवस्वनाय
शिवपालाय ६८०
शिवस्थूलाय
शिवजालाय
शिवालयाय
शिवावेशाय
शिवोद्देशाय
शिवादेशाय
शिवोद्यताय
शिवपक्षाय
शिवाध्यक्षाय

ओं शिवरक्षाय नमः ६९१
शिवेक्षणाय
शिवपद्याय
शिवोद्विद्याय
शिवहृद्याय
शिवाद्यकाय
शिवपाद्याय
शिवस्वाद्याय
शिवार्घ्याय
शिवपाद्यकाय
शिवार्हाय ७००
शिवहार्दाय
शिवबिम्बाय
शिवार्भकाय
शिवमण्डलमध्यस्थाय



ओं शिवकेलिपरायणाय नमः
शिवामित्रप्रमथनाय
शिवभक्तार्तिनाशनाय
शिवभक्तिप्रियरताय
शिवप्रवणमानसाय
शिववाल्लभ्यपुष्टाङ्गाय
शिवारिहरणोत्सुकाय
शिवानुग्रहसंधात्रे
शिवप्रणयतत्पराय
शिवपादाब्ज-
लोलम्बाय
शिवपूजापरायणाय
शिवकीर्तनसंतुष्टाय
शिवोल्लासक्रियादराय
शिवापदानचतुराय

ओं शिवकार्यानुकूल-
दाय नमः
शिवपुत्रप्रीतिकराय
शिवाश्रितगणेष्टदाय
शिवमूर्धा-
भिषिक्ताङ्गाय
शिवसैन्यपुरस्सराय
शिवविश्वाससंपूर्णाय
शिवप्रमथसुन्दराय
शिवलीलाविनोदज्ञाय
शिवविष्णुमनोहराय
शिवप्रेमार्द्रदिव्याङ्गाय
शिववागमृतार्थविदे
शिवपूजाग्रगण्याय
शिवमङ्गलचेष्टिताय

ओं शिवदूषकविध्वंसिने नमः
शिवाज्ञापरिपालकाय
शिवसंसारशृङ्गाराय
शिवज्ञानप्रदायकाय
शिवस्थानधृतोद्दण्डाय
शिवयोगविशारदाय
शिवप्रेमास्पदोच्चण्ड-
दण्डनाडम्बरोद्भटाय
शिवार्चकपरित्रात्रे
शिवभक्तिप्रदायकाय
शिवध्यानैकनिलयाय
शिवधर्मपरायणाय
शिवस्मरणसांनिध्याय
शिवानन्दमहोदराय
शिवप्रसादसंतुष्टाय

ओं शिवकैवल्य-
मूलकाय नमः
शिवसंकीर्तनोल्लासाय
शिवकैलासभोगदाय
शिवप्रदोषपूजात्त-
सर्वसौभाग्य
सुन्दराय
शिवलिङ्गार्चना-
सक्ताय ७५०
शिवनामस्मृतिप्रदाय
शिवालयस्थापकाय
शिवाद्रिक्रीडनोत्सुकाय
शिवापदाननिपुणाय
शिववाक्परिपालकाय
शिवानीप्रीतिकुशलाय



ओं शिवाराति
विनाशकाय नमः
शिवात्मकक्रिया-
लोलाय
शिवसायुज्यसाधकाय
शिशिरेष्टाय ७६०
शिशिरदाय
शिशिरर्तुप्रियाय
शिशवे
शिशुप्रियाय
शिशुत्रात्रे
शिशुभाषिणे
शिशूत्सवाय
शिशुपालनतात्पर्याय
शिशुपूज्याय

ओं शिशुक्षमाय नमः
शिशुपालक्रोधहराय
शिशुशक्तिधरस्तुताय
शिशुपालघ्नविनुताय
शिशुपालनचेष्टिताय
शिशुचान्द्रायणप्रीताय
शिशुभावावनप्रभवे
शीकरप्रणयाय
शीकराङ्गाय
शीघ्राय
शीघ्रगाय ७८०
शीघ्रवेदिने
शीघ्रगामिने
शीघ्रयोध्रे
शीघ्रधिये

ओं शीघ्रकप्रियकृते नमः
शीघ्रिणे
शीघ्रदात्रे
शीघ्रभृते
शीतालंकरणाय
शीतजलास्वादन-
तत्पराय ७९०
शीताय
शीतकराय
शीतपुष्पधारिणे
शीतगवे
शीतप्रियाय
शीतभानवे
शीतरश्मये
शीतलाय

ओं शीतप्रभाय नमः
शीतलाढ्याय ८००
शीतांशवे
शीतवीर्यकाय
शीतलाङ्गाय
शीतसहाय
शीताद्रिनिलयप्रियाय
शीत्पुटभ्रुवे
शीतनेत्राय
शीर्णाङ्घ्रिभयनाशनाय
शीताश्मगिरिसंचारिणे
शीर्णपर्णसुमोत्सुकाय
शीभङ्गाय
शीर्षण्यधराय
शीर्षरक्षकाय



ओं शीलवते नमः
शीलज्ञाय
शीलदाय
शीलपालकाय
शीलवत्प्रभवे
शुकतुण्डनिभापाङ्गाय
शुकवाहनसोदराय ८२०
शुकप्रियफलास्वादाय
शुकवाक्यप्रियाय
शुम्भिने
शुकवाहप्रियाय
शुक्तिकाजहाराय
शुकप्रियाय
शुक्राय
शुक्रभुगारूढभूताय

ओं शुक्रप्रपूजिताय नमः
शुक्रशिष्यान्तकाय
शुक्रवर्णाय
शुक्रकराय
शुचये
शुक्लाय
शुक्लनुताय
शुक्लिने
शुक्लपुष्पाय
शुक्लदाय
शुक्लाङ्गाय
शुक्लकर्मणे ८४०
शुचिभूमिनिवासकाय
शुचिप्रदाय
शुचिकराय

ओं शुचिकर्मणे नमः
शुचिप्रियाय
शुचिरोचिषे
शुचिमतये
शुण्ठीगुडजलादराय
शुद्धाय
शुद्धफलाहाराय ८५०
शुद्धान्तपरिपालकाय
शुद्धचेतसे
शुद्धकर्मणे
शुद्धभावाय
शुद्धिदाय
शुभाय
शुभाङ्गाय
शुभकृते

ओं शुभेच्छाय नमः
शुभमानसाय ८६०
शुभभाषिणे
शुभनुताय
शुभवर्षिणे
शुभादराय
शुभशीलाय
शुभप्रीताय
शुभंयुवे
शुभपोषकाय
शुभंकराय
शुभगुणाय ८७०
शुभाचाराय
शुभोत्सवाय
शुभादराय



ओं शुभोदाराय नमः
शुभाहाराय
शुभावहाय
शुभान्विताय
शुभहिताय
शुभवर्णाय
शुभाम्बराय ८८०
शुभभक्ताय
शुभासक्ताय
शुभयुक्ताय
शुभेक्षणाय
शुभ्राय
शुभ्रगणाय
शुभ्रवस्त्राय

ओं शुभ्रविभूषणाय नमः
शुंभविध्वंसिनीभूताय
शुल्कादाननिपातकाय
शुष्मद्युतये
शुष्मिसखाय
शुश्रूषाद्रुतशंकराय
शूराय
शूराश्रिताय
शूरगणाय
शूरचमूपतये
शूरप्रवरसंदोहाय
शूरभक्ताय
शूरवते ९००
शूरसेनाय

ओं शूरनुताय नमः
शूरपालाय
शूरजिते
शूरदेवाय
शूरविभवे
शूरनेत्रे
शूरराजे
शूलपाणियुताय
शूलिने ९१०
शूलायुधविशारदाय
शूलिनीप्रियकृते
शूलवित्रस्तरिपु-
मण्डलाय
शृङ्गारखेलाय
शृङ्गारगात्राय

ओं शृङ्गारशेखराय नमः
शृङ्गारजटिलाय
शृङ्गाटकसंचार-
कौतुकाय
शृङ्गारभूषणाय
शृङ्गारयोनिजन-
नार्भकाय ९२०
शेमुषीदुःखहन्त्रे
शेखरीकृतमूर्धजाय
शेषस्तुताय
शेषपाणये
शेषभूषणनन्दनाय
शेषाद्रिनिलयप्रीताय
शेषोदरसहोदराय
शैलजाप्रियकृत्कर्मणे



ओं शैलराज-
प्रपूजिताय नमः
शैलादिविनुताय ९३०
शैवाय
शैवशास्त्रप्रचारकाय
शैवधीराय
शैववीराय
शैवशूराय
शैवराजे
शैवत्राणाय
शैवगणाय
शैवप्राणाय
शैवविदे ९४०
शैवास्त्राय
शैवशस्त्राढ्याय

ओं शैवभृते नमः
शैवपालकाय
शैवदक्षाय
शैवपक्षाय
शैवरक्षाय
शैवहृदे
शैवाङ्गाय
शैवमन्त्रज्ञाय ९५०
शैवतन्त्रज्ञाय
शैवदाय
शैवमौनये
शैवमतये
शैवयन्त्रविधायकाय
शैवव्रताय
शैवनेत्रे

ओं शैवज्ञाय नमः
शैवसैन्यकाय
शैवनन्द्याय ९६०
शैवपूज्याय
शैवराज्याय
शैवपाय
शोणापाङ्गाय
शोणनखाय
शोणरत्नविभूषिताय
शोकघ्नाय
शोभनाक्षाय
शोधकाय
शोभनप्रदाय ९७०
शोषितारये
शोषहारिणे

ओं शोषिताश्रित-
रक्षकाय नमः
शौरीड्याय
शौरिवरदाय
शौरिद्विट्प्राण-
हारकाय
श्रद्धाधाराय
श्रद्धालवे
श्रद्धावित्परिपालकाय
श्रवणानन्दजनकाय
श्रवणाभरणोज्ज्वलाय
श्रीदाय
श्रीदप्रियाय
श्रीदस्तुताय
श्रीदप्रपूजिताय



ओं श्रुतिज्ञाय नमः
श्रुतिवित्पूज्याय
श्रुतिसाराय
श्रुतिप्रदाय
श्रुतिमौलिनुतप्रेम-
डिम्भाय ९९०
श्रुतिविचारकाय
श्लाघ्याय
श्लाघापराय

ओं श्लाघ्यगणाय नमः
श्लाघ्यगुणाकराय
श्वेताङ्गाय
श्वेतगजरथाय
श्वेतसुमादराय
श्रीधृक् श्रीधरदांपत्य-
स्वार्थसंमोहनाकृतये
श्रीकामाश्रितसंदोह-
कैरवानन्दचन्द्रमसे

इति श्रीशास्तृशवर्णसहस्रनामावलिः समाप्ता ॥



## ॥ शास्तुः अष्टोत्तरशतनामावलिः ॥

अस्य श्रीमहाशास्तुः अष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य ।
ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीहरिहरात्मजो देवता ।
अं बीजम्, ऐं शक्तिः, श्रीं कीलकम् ।
श्रीहरिहरात्मजप्रसादसिद्ध्यर्थे जपे विनियोगः ।

ओं अं रेवन्ताय अङ्गुष्ठाभ्यां नमः ।
ओं ऐं महाशास्त्रे तर्जनीभ्यां नमः ।
ओं श्रीं गोप्त्रे मध्यमाभ्यां नमः ।
ओं रुं प्रभवे अनामिकाभ्यां नमः ।
ओं ह्रीं दीप्त्रे कनिष्ठिकाभ्यां नमः ।
ओं प्रं प्रशास्त्रे करतलकरपृष्ठाभ्यां नमः ।

(एवं हृदयादिन्यासः)

ओं ह्रीं ज्वलग्रणी हुं फट् इति दिग्बन्धः ।



ध्यानम् —

विप्रारोपितधेनुकलुषच्छेदाय पूर्वं महान्
सोमारण्यजयन्तिमध्यमगते ग्रामे मुनिर्गौतमः ।
चक्रे यज्ञवरं कृपाजलनिधिस्तत्राविरासीत्प्रभुः
तस्मै श्रीगुरुमूर्तये नम इदं यो विष्णुशंभ्वोस्सुतः ॥

ओं रैवताचलश्रृङ्गाग्रमध्यस्थाय नमो नमः
रत्नादिसोमसंयुक्तशेखराय नमो नमः
चन्द्रसूर्यशिखावाहत्रिनेत्राय नमो नमः
पाशांकुशगदाशूलाभरणाय नमो नमः
मदघूर्णितपूर्णाब्रामानसाय नमो नमः
पुष्कलाहृदयांभोजनिवासाय नमो नमः
श्वेतमातङ्गनीलाश्ववाहनाय नमो नमः
रक्तमालाधरस्कन्धप्रदेशाय नमो नमः
वैकुण्ठनाथशंभ्वोश्च सुवत्साय नमो नमः

ओं त्रिकालवर्तमानानां भाषणाय नमो नमः
महासुरदशकरच्छेदनाय नमो नमः
देवराजसुवाक्तुष्टमानसाय नमो नमः
अभयङ्करमन्त्रार्थस्वरूपाय नमो नमः
जयशब्दमुनिस्तोत्रश्रोत्रियाय नमो नमः
सूर्यकोटिप्रतीकाशसुदेहाय नमो नमः
दण्डनाराजविलसत्कराब्जाय नमो नमः
मन्दाकिनीनदीतीरनिवासाय नमो नमः
मतंगोद्यानसंचारवैभवाय नमो नमः
सदा सद्भक्तिसन्दातृचरणाय नमो नमः
कृशानुकोणमध्यस्थकृपाङ्गाय नमो नमः २०
पार्वतीहृदयानन्दभरिताय नमो नमः
शाण्डिल्यमुनिसंस्तुत्यश्यामलाय नमो नमः
विश्वावसुसदासेव्यविभवाय नमो नमः
पञ्चाक्षरीमहामन्त्रपारगाय नमो नमः



ओं प्रभासत्याभिसंपूज्यपदाब्जाय नमो नमः
खड्गखेटफणीट्पाशसुभुजाय नमो नमः
मदत्रयद्रवगजारोहणाय नमो नमः
चिन्तामणिमहापीठमध्यगाय नमो नमः
शिखिपिञ्छजटाबन्धश्रीधनाय नमो नमः
पीतांबराबद्धकटिप्रदेशाय नमो नमः ३०
विप्राराधनसन्तुष्टविश्रान्ताय नमो नमः
व्योमाग्निमायासूर्येन्दुसुबीजाय नमो नमः
पुरा कुम्भोद्भवर्षीशघोषिताय नमो नमः
वर्गारिषट्कुलामूलविनाशाय नमो नमः
धर्मार्थकाममोक्षश्रीफलदाय नमो नमः
भक्तिप्रदानन्दगुरुपादुकाय नमो नमः
मुक्तिप्रदातृपरमदेशिकाय नमो नमः
परमेष्ठिस्वरूपेण पालकाय नमो नमः
परापरादिपद्मादिदायकाय नमो नमः

ओं मनुलोकैस्सदावन्द्यमङ्गलाय नमो नमः ४०
कृते प्रत्यक्षरं लक्षात्कीर्तिदाय नमो नमः
त्रेतायां द्व्यष्टलक्षेण सिद्धिदाय नमो नमः
द्वापरैकाष्टलक्षेण वरदाय नमो नमः
कलौ लक्षचतुष्षष्ट्या प्रसन्नाय नमो नमः
संख्यासहस्रजापेन सन्तुष्टाय नमो नमः
यदुद्दिश्य जपस्सद्यस्तत्प्रदात्रे नमो नमः
शौनकस्तोत्रसंप्रीतसगुणाय नमो नमः
शरणागतभक्तानां सुमित्राय नमो नमः
पाण्योर्गजध्वजं घण्टां बिभ्रते ते नमो नमः
आजानुद्वयसंदीर्घबाहुकाय नमो नमः ५०
रक्तचन्दनलिप्ताङ्गशोभनाय नमो नमः
कमलासुरजीवापहरणाय नमो नमः
शुद्धचित्तसुभक्तानां रक्षकाय नमो नमः
मार्यादिदुष्टरोगाणां विनाशाय नमो नमः



ओं दुष्टमानुषगर्वापहरणाय नमो नमः
नीलमेघनिभाकारसुदेहाय नमो नमः
पिपीलिकादिब्रह्मान्तवश्यदाय नमो नमः
भूतनाथसदासेव्यपदाब्जाय नमो नमः
महाकाळादिसंपूज्यवरिष्ठाय नमो नमः
व्याघ्रशार्दूलपश्चास्य वश्यदाय नमो नमः ६०
मधुरानृपसंमोहसुवेषाय नमो नमः
पाण्ड्यभूपसभारत्नपङ्कजाय नमो नमः
राघवप्रीतशबरीस्वाश्रमस्थाय ते नमः
पम्पानदीसमीपस्थसदनाय नमो नमः
पन्दळाधिपवन्द्यश्रीपदाब्जाय नमो नमः
भूतवेताळकूष्माण्डोच्चाटनाय नमो नमः
भूपाग्रे वनशार्दूलाकर्षणाय नमो नमः
पाण्ड्येशवंशतिलकसुरूपाय नमो नमः
भद्रवाणीजरारोगध्वंसनाय नमो नमः

ओं वाण्या चोदितशार्दूलशिशुदाय नमो नमः ७०
केरळेषु सदाकेळिविग्रहाय नमो नमः
आश्रिताखिलवंशाभिवृद्धिदाय नमो नमः
छागास्यराक्षसीपाणिखण्डनाय नमो नमः
सदाज्वलद्घृणीशस्त्रधारणाय नमो नमः
दीप्त्यादिशक्तिनवकैस्सेविताय नमो नमः
प्रभूतनाथपञ्चास्यपीठस्थाय नमो नमः
प्रमदाकर्षसामर्थ्यदायकाय नमो नमः
षट्पञ्चाशद्देशपतिवश्यदाय नमो नमः
दुर्मुखीनामदैत्यस्त्रीदोच्छेदाय नमो नमः
टादिफान्तदळैः कलशपद्मस्थाय नमो नमः ८०
शरच्चन्द्रप्रतीकाशवक्त्राब्जाय नमो नमः
वश्याद्यष्टक्रियाकर्मफलदाय नमो नमः
वनवासादिसुप्रीतवरिष्ठाय नमो नमः
पुरा शचीभयभ्रान्तिप्रणाशाय नमो नमः



ओं सुरेन्द्रप्रार्थिताभीष्टफलदाय नमो नमः
शंभोर्जटासमुत्पन्नसेविताय नमो नमः
विप्रपूजासभामध्यनर्तकाय नमो नमः
जपापुष्पप्रभाभोर्ध्वाधरोष्ठाय नमो नमः
साधुसज्जनसन्मार्गरक्षाध्यक्षाय ते नमः
मध्वाज्यगुळवत्स्वादुवचनाय नमो नमः ९०
रक्तसैकतशैलाधःक्षेत्रस्थाय नमो नमः
केतकीवनमध्यस्थकुमाराय नमो नमः
गोहत्तिपापशमनचतुराय नमो नमः
स्वपूजनात्पापमुक्तगौतमाय नमो नमः
उदीच्याचलवारीशग्रामरक्षाय ते नमः
गौतमीसलिलस्नानसन्तुष्टाय नमो नमः
सोमारण्यजयन्त्याख्यक्षेत्रमध्याय ते नमः
गौतमाख्यमुनिश्रेष्ठयागार्घ्याचर्याय ते नमः
कृत्तिकर्क्षोद्भवग्रामप्रवेशाय नमो नमः

ओं कृत्तिकर्क्षोद्भवग्रामक्लेशनाशायते नमः १००
कृत्तिकर्क्षोवग्रामपालनाय नमो नमः
सदाध्यायिजगन्नाथसूनुवाक्पतये नमः
कश्यपादिमुनीन्द्राणां तपोदेशाय ते नमः
जन्ममृत्युजरातप्तजनशान्तिकृते नमः
देवराजमनःक्लेशमर्दनाय नमो नमः
आयुर्यशःश्रियं प्रज्ञां पुत्रान्देहि नमो नमः
रेवन्दजृंभिन् एह्येहि प्रसादं कुरु ते नमः
ब्रह्मविष्णुशिवात्मैक्यस्वरूपाय नमो नमः १०८



॥ श्रीशास्तुः पञ्चरत्नम् ॥

लोकवीरं महापूज्यं सर्वरक्षाकरं विभुम् ।
पार्वतीहृदयानन्दं शास्तारं प्रणमाम्यहम् ॥ १ ॥

विप्रपूज्यं विश्ववन्द्यं विष्णुशंभ्वोः प्रियं सुतम् ।
क्षिप्रप्रसादनिरतं शास्तारं प्रणमाम्यहम् ॥ २ ॥

मत्तमातङ्गगमनं कारुण्यामृतपूरितम् ।
सर्वविघ्नहरं देवं शास्तारं प्रणमाम्यहम् ॥ ३ ॥

अस्मत्कुलेश्वरं देवमस्मच्छत्रुविनाशन(क)म् ।
अस्मदिष्टप्रदातारं शास्तारं प्रणमाम्यहम् ॥ ४ ॥

पाण्ड्येशवंशतिलकं केरले केलिविग्रहम् ।
आर्तत्राणपरं देवं शास्तारं प्रणमाम्यहम् ॥ ५ ॥

पञ्चरत्नाख्यमेतद्यो नित्यं शुद्धः पठेन्नरः ।
तस्य प्रसन्नो भगवान् शास्ता वसति मानसे ॥ ६ ॥

इति शास्तुः पञ्चरत्नं समाप्तम् ॥

## ॥ श्रीधर्मशास्तुः स्तुतिदशकम् ॥

श्रीशानुरूपफलदं चरणारविन्द-
भाजामपार करुणार्णव पूर्णचन्द्रम् ।
नाशाय सर्वविपदामपि नौमि नित्य-
मीशानकेशवसुवं भुवनैकनाथम् ॥ १ ॥

पिञ्छावली वलयिताकलितप्रसून-
संजातकान्ति भरभासुर केशभारम् ।
शिञ्जानमञ्जु मणिभूषणरञ्जिताङ्गं
चन्द्रावतंसहरिनन्दनमाश्रयामि ॥ २ ॥

आलोलनीलललितालकहाररम्य-
माकम्रनासमरुणाधरमायताक्षम् ।
आलम्बनं त्रिजगतां प्रमथाधिनाथ-
मानम्रलोक हरिनन्दनमाश्रयामि ॥ ३ ॥



कर्णावलम्बि मणिकुण्डलभासमान-
गण्डस्थलं समुदिताननपुण्डरीकम् ।
अर्णोजनाभहरयोरिव मूर्तिमन्तं
पुण्यातिरेकमिव भूतपति नमामि ॥ ४ ॥

उद्दण्डचारुभुजदण्डयुगाग्रसंस्थ-
कोदण्डबाणमहितान्तमदान्तवीर्यम् ।
उद्यत्प्रभापटलदीप्रमदभ्रसारं
नित्यं प्रभापतिमहं प्रणतो भवामि ॥ ५ ॥

मालेयपङ्कसमलंकृतभासमान-
दोरन्तरालतरलामलहारजालम् ।
नीलातिनिर्मलदुकूलधरं मुकुन्द-
कालान्तकप्रतिनिधिं प्रणतोऽस्मि नित्यम् ॥

यत्पादपङ्कजयुगं मुनयोऽप्यजस्रं
भक्त्या भजन्ति भवरोगनिवारणाय ।

पुत्रं पुरान्तकमुरान्तकयोरुदारं
नित्यं नमाम्यहममित्रकुलान्तकं तम् ॥ ७ ॥

कान्तं कलापकुसुमद्युतिलोभनीयं
कान्तिप्रवाहविलसत्कमनीयरूपम् ।
कान्तातपत्रसहितं निखिलामयौघ
शान्तिप्रदं प्रमथनाथमहं नमामि ॥ ८ ॥

भूतेश भूरिकरुणामृतपूरपूर्ण-
वारांनिधे वरद भक्तजनैकबन्धो ।
पायाद्भवान् प्रणतमेनमपारघोर-
संसारभीतमिह मामखिलामयेभ्यः ॥ ९ ॥

हे भूतनाथ भगवन् भवदीयचारु
पादाम्बुजे भवतु भक्तिरचञ्चला मे ।
नाथाय सर्वजगतां भजतां भवाब्धि-
पोताय नित्यमखिलाङ्गभुवे नमस्ते ॥ १० ॥

इति शास्तुः स्तुतिदशकं समाप्तम् ॥



अस्य श्रीशास्तृमहामन्त्रस्य अर्धनारीश्वरऋषिः अनुष्टुप् छन्दः । महाशास्ता देवता । ह्रां बीजम् । ह्रीं शक्तिः । ह्रूं कीलकम् । महाशास्तृप्रसादसिद्ध्यर्थे जपे विनियोगः । ओं ह्रीं हरिहरपुत्राय पुत्रलाभाय शत्रुनाशनाय मदगजवाहनाय महाशास्त्रे इति न्यासः । ध्यानम्—

आश्यामलं कोमलविशालतनुचित्र-
वासो वासानमरुणोत्पलदानहस्तम् ।
उत्तुङ्गरत्नमुकुटं कुटिलाग्रकेशं
शास्तारमिष्टवरदं शरणं प्रपद्ये ॥

ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हरिहरपुत्राय पुत्रलाभाय शत्रुनाशनाय मदगजवाहनाय महाशास्त्रे स्वाहा ॥

॥ शास्तृपूजा ॥

ओं गुं गुरुभ्यो नमः इत्यादि । ओं पं पद्मासनाय नमः । दीप्त्यै नमः । प्रभायै नमः । कान्त्यै नमः ।

विभून्यै नमः । मालिन्यै नमः । प्रभूतिसिंहासनाय नमः । सर्वशक्तिमयाय नमः । पद्माय नमः । ओं भूतनाथाय विद्महे महेभवाहनाय धीमहि ॥ तन्नः शास्ता प्रचोदयात् ॥

ओं भगवन् आगच्छागच्छ । ओं आवाहयामि । पुरुषसूक्तेन षोडशोपचारपूजा । ओं आवाहितो भव । स्थापितो भव । संनिरुद्धो भव । सांनिध्यं कुरु कुरु । प्रसीद प्रसीद । त्रिर्व्यापकं कृत्वा, लिपिन्यासं कृत्वा, पञ्च-तत्त्वन्यासमपि कृत्वा, ओं स्फें पराय प्रतिष्ठितात्मने नमः । ओं स्फें ब्रह्मपराय विद्यात्मने नमः । ओं स्फें ब्रह्मपराय नित्यात्मने नमः । पुनरपि व्यापकं कृत्वा, अक्षरन्यासं कृत्वा ओं स्फें ओं नमो भगवते शास्त्रे हुं फट् स्वाहा ॥

ओं हं हृदयाय नमः । ओं हां शिरसे स्वाहा । ओं ह्रीं शिखायै वषट् । ओं प्रभवे कवचाय हुम् । दीप्त्रे नेत्राभ्यां वौषट् । प्रशास्त्रे अस्त्राय फट् । धनुषे प्रभायै नमः । सत्यकाय नमः । एवं ऋषिः गायत्री छन्दः ।



शास्ता देवता । अर्घ्यपाद्यादि पुरुषसूक्तेन । शास्तृगायत्री-पुरःसरमायुधपूजा । ओं हुं फट् क्षुरिकाय नमः । खड्गाय नमः । धनुषे नमः । शराय नमः । मधुकराय नमः । शम्बराय नमः । इन्द्राय नमः । वज्राय नम । घोषवते नमः । शास्तृरक्षा—ओं ज्वल ज्वल औ बृहि बृहि हुं फट् स्वाहा । क्षुरिक पाहि । खड्ग छिन्धि छिन्धि भिन्धि भिन्धि ॥ द्वारस्थां वश्यं संपूज्य मण्डपे --

विघ्नेश दक्षिणामूर्ति दिक्पालान् संपूज्य च क्रमात् ।
मातृशास्तारमर्घ्यं च स्कन्दघोपवते क्रमात् ॥

दिक्षुश्च दिक्ष्वन्तरं च वभौ द्वास्थं मरुत्सु च ।
गोदा च पिङ्गलाक्षश्च वीरसेनश्च शांभवः ॥

त्रिनेत्रः शूलिनो(शूरवीरौ च)दक्षो भीमरूपो बहिः क्रमात् ।
गोप्तृपार्षदेभ्यः इत्यष्टदिक्षु बलिं हरेत् ॥
वीरघ्यं हुं महावीरं विद्युद्दन्तावलिं प्रभुम् ।
पूर्वदिक्षुस्तीक्ष्णदन्त ताराक्षश्च भवोद्भवः ॥

भूतेशस्तूपराक्षश्च बलिपीठे बलिं हरेत् ।
ध्वजदेवग्रहाद्यैश्च क्षेत्रपालाय चोदिते ॥

क्षुरिकापाणये नमः । खड्गहस्ताय नमः । हुं पराय गोप्त्रे अश्वाय नमः । ओं दं दक्षिणामूर्तये । ओं गं गणपतये वीरबाहवे नमः । महावीराय । तत्पार्षदेभ्यो नमः । इन्द्राय पुराधिपतये शास्तृभ्यो नमः । घोषवतेभ्यो नमः । तीक्ष्णाय नमः । तीक्ष्णदन्ताय नमः । तत्पार्षदेभ्यो नमः । गोप्त्रे नमः । पिङ्गाक्षाय नमः । वीरसेनाय नमः । शंभवे त्रिनेत्राय शूलिने दक्षाय भीमरूपाय मरुत्पार्षदेभ्यो नमः । भूतेशाय शास्त्रे नमः । दक्षिणामूर्तिपार्षदेभ्यो नमः । ध्वजाधिपतये नमः । तत्पार्षदेभ्यो नमः । देवग्रहेभ्यो नमः । इत्यादि । पिशाचग्रहेभ्यो नमः । परापरगोप्त्रे क्षेत्रपालाय नमः । पुष्पधूपदीपजलान्तं मुद्रासहितमभ्यर्च्य उद्वासयेत् ।

---